यथा एकोऽपि देवदत्तः कदाचिद्राज्ञोभृत्य कदाचिदमात्यादेरिति, एवमाकाशास्तिकायादिप्रदेशोऽपिवाच्यं, तदेव नैयत्याभावात्तवाप्यनवस्था प्रसज्येतेति, तन्मैव भण–भाज्य प्रदेशः, अपितु इत्थ भण-'धम्मे पएसे' [ से पएसे धम्मे ]' इत्यादि, इदमुक्तं भवति धर्म प्रदेश इति-धर्मात्मक प्रदेश इत्यर्थः अत्राह–नन्वयं प्रदेश सकलधर्मास्तिकायादिव्यतिरिक्त. सन् धर्मात्मक इत्युच्यते, आहोस्वित्तदेकदेशाव्येतिरिक्त सन् यथा सकलजीवास्तिकायैकदेशैकजीवद्रव्याव्यतिरिक्त सँस्तत्प्रदेशो जीवात्मक इति व्यपदिश्यत इत्याह 'से पएसे धम्मेऽ' त्ति स प्रद्रेशो धर्म -सकलधर्मास्तिकायादव्यतिरिक्त-इत्यर्थः, जीवास्तिकाये हि परस्परं भिन्नान्येवानन्तानि जीवद्रव्याणि भवन्ति, अतो य एकजीवद्रव्यस्य प्रदेश स नि शेष जीवास्तिकायैकदेशवृत्तिरेव सन् जीवात्मक इत्युच्यते, अत्र तु धर्मास्तिकाय एकमेव द्रव्यं तत सकलधर्मास्तिकाया व्यतिरिक्त एव सँस्तत्प्रदेशो धर्मात्मक इत्युच्यत इति भाव, । अधर्माकाशास्तिकाययोरप्येकैकद्रव्यत्वादेवमेव भावनीयम् । जीवास्तिकाय तु 'जीवेपएसे से पएसे नोजीवे, त्ति, जीव प्रदेश इति जीवास्तिकायात्मकः प्रदेशः इत्यर्थ. सच प्रदेशो नोजीव, नोशब्दस्येह देशवचनत्वात् सकलजीवास्तिकायैकदेश वृत्तिरित्यर्थः यो ह्येकजीवद्रव्यात्मक प्रदेश स कथमनन्तजीवद्रव्यात्मके समस्त जीवास्तिकाये वर्तेत इति भाव, एव स्कन्धात्मकः प्रदेशो नो स्कन्ध, स्कन्धद्रव्याणामनन्तत्वादेक देशवर्तिरित्यर्थ, । एव वदन्तं शब्दनयं नानार्थसमभिरोहणात् समभिरूढ स आह–यद्भणसि–धर्म प्रदेश. सप्रदशो धर्म इत्यादि, तन्न भवति–न युज्यते कस्मादित्याह–इह खलु द्वौ समासौ भवत', तद्यथा–तत्पुरुष' कर्मधारयश्च, इदमुक्तं भवति,– धम्मे पएसे से पएसे धम्मे इत्युक्ते समासद्वयारम्भकवाक्यद्वयमत्र सम्भाव्यते, तथाहि-यदि धर्म शब्दात्

सप्तमीयं तदा सप्तमीतत्पुरुषस्यारम्भकमिदं वाक्यं, यथा वने हस्तीत्यादि, अथ प्रथमा तदा कर्मधारयस्य, यथा नीलमुत्पलमित्यादि, ननु यदि वाक्यद्वयमत्र सम्भाव्यते तर्हि कथं द्वौ समासौ भवत इत्युक्तम् ?, उच्यते, समासारम्भक-वाक्ययोः समासोपचारात्, अथवा अलुकसमासविवक्षया समासावप्येतौ भवतो, यथा कण्ठेकाल इत्यादीत्यदोषः, यदि नाम द्वौ समासावत्र भवतस्ततः किमित्याह तन्न ज्ञायते कतरेण समासेन भणसि ?, किं तत्पुरुषेण कर्मधार-येण वा ? यदि तत्पुरुषेण भणसि, तन्मैवं भण, दोषसम्भवादितिशेष स चायं दोषो—धर्मे प्रदेश इति भेदापत्ति , यथा कुण्डेवदराणीति, न च प्रदेशेदेशिनौ भेदेनोपलभ्येते, अथ अभेदेऽपि सप्तमीदृश्यते यथा घटेरूपमित्यदि, यद्येवमुभयत्रदर्शनात् संशयलक्षणो दोष स्यात्, अथ कर्म धारयेण भणसि ? ततो विशेषेण भण, धम्मे अ से पएसे य से' त्ति, धर्मश्च स प्रदेशश्च स इति समानाधिकरणः कर्मधारयः, एवं च सप्त म्याशङ्काभावतो न तत्पुरुषसम्भव इति भावः। आह—नन्वयं प्रदेशः समस्तादपि धर्मास्तिकायादव्यतिरिक्त. सन् समानाधिकरणतयाऽनिर्दि-श्यते ? उत तदेकदेशवृत्ति सन् यथा जीवास्तिकायैकदेशवृत्तिर्जीवप्रदेश-इत्याशंक्याह—'से पएसे धम्मे'त्ति, स च प्रदेशः सकलधर्मास्तिका-यादव्यतिरिक्तो न पुनस्तदेकदेशवृत्तिरित्यर्थ., शेषभावना पूर्ववत, से 'पएसे नोजीवे से पएसे नोखन्धे' इत्यत्रापि पूर्ववदेवार्थकथनम्। एवं वदन्तं समभिरूढं साम्प्रतमेवंभूतो भणति-यद्यद्धर्मास्तिकायादिकं वस्तु भणसि तत्तत् सर्वं समस्तं कृत्स्नं देशप्रदेशकल्पनारहितं प्रतिपूर्णम्-आत्म-स्वरूपेणाविकलं निरवशेषं-तदेवैकत्वान्निरवयवमेकग्रहणगृहीतम् एकाभिधाना भिधेयं नानाभिधानाभिधेयं, तानि ह्येकस्मिन्नर्थेऽसौ नेच्छति, अभिधानमे-

दे वस्तुभेदाभ्युपगमात्, तदेवंभूतं तद्धर्मास्तिकायादिकंवस्तु भण, नतु प्रदेशादिरूपतया, यतो देशप्रदेशौ ममावस्तुभूतौ, अखण्डस्यैववस्तुनः सत्त्वेनोपयोगात्, तथाहि-प्रदेशप्रदेशिनोर्भेदो वा स्यादभेदो वा ? यदि प्रथमः पक्षस्तर्हि भेदेनोपलब्धिप्रसंगो, न च तथोपलब्धिरस्ति, अथाभेदस्तर्हि धर्मप्रदेशशब्दयो पर्यायतैव प्राप्ता, एकार्थविषयत्वात्, न च पर्यायशब्दयोर्युगपदुच्चारणं युज्यते, एकेनैव तदर्थप्रतिपादने द्वितीयस्य वैयर्थ्यात्, तस्मादेकाभिधानभिधेयं परिपूर्णमेकमेववस्त्विति, तदेवमेतेनिजनिजार्थसत्यताप्रतिपादनपरा विप्रतिपद्यन्ते नयाः, एते च परस्पर निरपेक्षा दुर्नयाः, सौगतादिसमयवत्, परस्परसापेक्षास्तु सुनयाः, तैश्चपरस्पर सापेक्षैः समुदितैरेव सम्पूर्णं जिनमतं भवति, नैकैकावस्थायाम्, उक्तं च स्तुतिकारेण—"उदधाविवसर्वसिन्धव, समुदीर्णास्त्वयि नाथ । दृष्टय न च तासु, भवान् प्रदृश्यते, प्रविभक्तासु सरित्स्विवोदधिः ॥ १ ॥ एते च नया ज्ञानरूपास्ततो जीवगुणत्वेन यद्यपि गुणप्रमाणेऽन्तर्भवन्ति तथापि प्रत्यक्षादि प्रमाणेभ्यो नयरूपतामात्रेण पृथक् प्रसिद्धत्वाद्बहुविचार विषयत्वाज्जिनागमे प्रतिस्थानमुपयोगित्वाच्च जीवगुणप्रमाणात् पृथगुक्ता, तदेत् प्रदेशदृष्टांतेनेति निगमनम् । प्रस्थकादिदृष्टातत्रयेण च नयप्रमाणं प्रतिपाद्योपसहरति—तदेतन्नयप्रमाणमिति । अनेन च दृष्टांतत्रयेण दिग्मात्रदर्शनमेव कृतं, यावता यत्किमपि जीवादि वस्त्वास्ति तत्र सर्वत्र नयविचार. प्रवर्तते, इत्यलं बहुजल्पितेनेति ॥ १४५ ॥

अनुयोगद्वारसूत्र—मलधारीयावृत्तिः, प्रमाणद्वारम् ।

— — — —

## अथ नयद्वारमभिधित्सुराह——

मूलः——से कि तं णए ? सत्त मूलणया पण्णत्ता, ।। तंजहा— णेगमे संगहे ववहारे उज्जुसुए सद्दे समभिरूढे एवंभूए, तत्थ—णेगेहि माणेहिं मिणइति णेगमस्स य निरुत्ती । सेसाणंपि नयाणं लक्खणमिणमो सुणह वोच्छं ।। १३६ संगहिअपिंडिअत्थं संगहवयणं समासओ विंति । वच्चइ विणिच्छिअत्थं ववहारो सव्व दव्वेसु ।। १३७ ।। पच्चु-प्पन्नग्गाही उज्जुसुओ णयविही मुणेअव्वो । इच्छइ विसेसियतरं पच्चुप्पण्णं णओ सद्दो ।। १३८ ।। वत्थूओ संकमणं होइ अवत्थू नए समभिरूढे । वंजण अत्थ तदुभयं एवंभूओ विसेसेइ ।। १३६ ।।

टीका :— अथ कोऽयं पूर्वोक्त शब्दार्थो नयः ? तत्रोत्तरभेदापेनया सप्तैव मूलभूता नया. मूल नयाः, तद् यथा नैगम इत्यादि तत्र ।म व्याचिख्यासुराह—णेगेहिमित्यादि गाथा, व्याख्या—न एकं नैकं भूतानीत्यर्थः नैकैर्मानैः-महासत्तासामान्यविशेपादिज्ञानैर्मिमीते—मिनोति वा वस्तूनि परिच्छिनत्तीति नैगमः इतीयं नैगमस्य निरुक्तिः-

व्युत्पत्ति', अथवा निगमा—लोके वसामि तिर्यग्लोके वसामीत्यादय पूर्वोक्ता एव वहव: परिच्छेदास्तेषु भवो नैगमः, शेषाणामपि नयानां संग्राहादीना लक्षणमिदं शृणुत वक्ष्येऽहमिति गाथार्थ ॥ यथा प्रतिज्ञात-मेवाह "संगहिअ" गाहा, व्यख्या-सम्यग् गृहीत-उपात्त संगृहीत पिण्डित एकजातिमापन्नोऽर्थो विषयो यस्य सग्रहवचनस्य तत् सग्रहीतपिण्डितार्थं संग्रहस्यवचनं सग्रहवचनं 'समासत, सक्षेपतो ब्रुवतो तीर्थंकरगणधारा:, अयहि सामान्येमेवेच्छति न विशेषान्, ततोऽस्य वचन संगृहीतसामान्यार्थमेव भवति, अत एव सङ्गृह्णाति-सामान्यरूपतया सर्वं वस्तु क्रोडीकरोतीति सग्रहोऽयमुच्यते, युक्ति श्चात्र लेशतः प्रागुदर्शितैव, "वच्चई" त्यादि, निराधिक्ये चयनं चय' पिण्डीभवनं अधिकश्चयो निश्चय -सामान्य विगतो निश्चयो विनिश्चयो—सामान्याभाव तदर्थ-तन्निमित्त व्रजति-प्रवर्तते, सामान्याभावायैव सर्वदा यतते व्यवहारो नय इत्यर्थः, क ? 'सर्व द्रव्येषु' द्रव्य विषये, लोके हि घट स्तम्भाम्भोरुहादयो विशेषा एव प्रायो जलाहरणादि क्रियासूपयुज्य-माना दृश्यन्ते न पुनस्तदतिरिक्त सामान्यम्, अतो लोकव्यवहारानङ्गत्वात् सामान्यमसौ नेच्छती ति भावः, अत एव लोकव्यवहार प्रधानोनयो व्यवहारनयोऽसावुच्यते, युक्तिश्चात्रापिलेशत प्रागुक्तैव, अथवा विशेषेण निश्चयो विनिश्च—आगोपालाद्यंगना (द्य) वबोधो न कतिपय विद्वत्सम्बद्ध: तदर्थ व्रजति व्यवहारनयः सर्व द्रव्येषु इदमुक्त भवति यद्यपि निश्चयेन घटादिवस्तूनि सर्वाण्यपि प्रत्येक पचवर्णानि द्वि-गंधानि पचरसान्यष्टस्पर्शानि तथाऽपि गोपालाङ्गनादीना यत्रैव कांचदे कस्मिन् स्थले कालनीलवर्णादौ विनिश्चयो भवति तमेवासौ सत्त्वेन

प्रतिपद्यते न शेषान्, लोकव्यवहारपरत्वादेवेति गाथोर्थः ॥ 'पच्चुप्पन्नं· गाहा' साम्प्रतमुत्पन्नं प्रत्युत्पन्नमुच्यते वर्तमानकालभावीत्यर्थः, तद् ग्रहीतुं शीलमस्येति प्रत्युत्पन्नग्राही ऋजुसूत्रो नयविधिर्मु णितव्य, तत्रातीतानागतयाभ्युपगमकुटिलतापरिहारेण ऋजु-अकुटिल वर्तमान काल भावि वस्तु सूत्रयतीति ऋजुसूत्र, अतीतनागतयो विनाशानुत्पत्तिभ्यामसत्वात्, असदभ्युपगमश्च कुटिल इति भावः, अथवा ऋजु—अवक्रं श्रुतमस्येति ऋजुश्रुतः' शेषज्ञानैर्मु ख्यतया तथाविधपरोपकारासाधनात् श्रुतज्ञानमेवैक मिच्छतीत्यर्थः, उक्तंच-सुयनाणे अ निउतं केवलेतयाणंतरं । अप्पणो य परेसिं च, जम्हा तं परिभावगं ॥ छाया ॥ श्रुतज्ञाने च नियुक्तं (नियोक्तुं योग्यं) केवलेतदनन्तरम् । आत्मनश्च परेषाञ्च यस्मात्तत् परिभावकम् ॥१॥" त्ति, अयञ्च नयो वर्तमानमपीच्छन् स्वकीयमेवेच्छति. परकीयस्य स्वाभिमत कार्य्यसाधकत्वेन वस्तुतोऽसत्वादिति, अपरञ्च-भिन्न लिंगैर्भिन्नवचनैश्च शब्दैरेकमपि वस्त्वभिधीयते इति प्रतिजानीते-- यथा तट तटी तटमित्यादि, तथा गुरुगुवः इत्यादि, तथा इंद्रा- देर्नामस्थापनादिभेदान् प्रतिपद्यते, वक्ष्यमाणनयस्त्वतिविशुद्धत्वात् लिंगवचनभेदात वस्तुभेदं प्रतिपत्स्यते, नामस्थापनाद्रव्याणि च नाभ्युप- गमिष्यतीति भाव', इत्युक्त ऋजुसूत्र. ॥ अथ शब्द उच्यते-तत्र "शप आक्रोशे" शप्यते अभिधीयते वस्त्वनेनेति शब्दः, तमेव गुणीभूतार्थं मुख्यतया यो मन्यते स नयोऽप्युपचाराच्छब्दः, अयञ्च प्रत्युपत्पन्नं वर्तमान तदपि ऋजुसूत्राभ्युपगमापेक्षया विशेषितृतरमिच्छति, तथाहि तट- स्तटी तटमित्यादि शब्दानां भिन्नान्येवाभिधेयानि, भिन्नलिंगवृतित्वात्,

स्त्रीपुरुषनपुंस्क शब्दवदित्यसौप्रतिपद्यते, तथा गुरुर्गुरवः इत्यत्राप्याभिधेयभेद एव, भिन्नवचनवृत्तित्वात्पुरुषः पुरुषा इत्यादिवदिति, नामस्थापनाद्रव्यरूपाश्च नेन्द्राः, तत् कार्य्याकरणात खपुष्पवदिति प्राक्तनाद् विशुद्धत्वाद् विशेषिततरोऽस्याभ्युपगमः, समानलिंगवचनानां तु बहूनामपि शब्दानामेकमभिधेयमसौ मन्यते, यथेन्द्रः शक्रः पुरन्दर इत्यादि इति गाथार्थ ॥ "वत्थूओ" इत्यादि, वस्तुनः— इद्रादेः सङ्क्रमणमन्यत्र शक्रादाविति दृश्यं, भवति अवस्तु अभवतीत्यर्थः, क्वेत्याह नये—समभिरूढे, समभिरूढनयमतेनेत्यर्थः, तत्र वाचकभेदेनापरापरान् वाच्यविशेषान् समभिरोहति समभिगच्छति प्रतिपद्यत इति समभिरूढ., अयमत्रभावर्थः—इंद्रशक्रपुरन्दरादिशब्दान् अनन्तरं शब्दनयेन एकाभिधेयत्वेनेष्टानसौ विशुद्धतरत्वात्, प्रत्येकं भिन्नाभिधेयान् प्रतिपद्यते, भिन्नप्रवृत्तिनिमित्तत्वात् सुरमनुजादि शब्दवत्, तथाहि—इन्दतीति इन्द्र शक्नोतीति शक्रः पुरं दारयतीति पुरदर, इह परमैश्वर्य्यादीनि भिन्नान्येवात्र प्रवृत्तिनिमित्तानि, एवमप्येकार्थत्वे अतिप्रसगो, घटपटादिशब्दानामप्येकार्थताऽऽपत्तेः, एवं च सति यदा इन्द्रशब्दः शक्रशब्देन सहैकार्थ उच्यते तदा वस्तुन परमैश्वर्य्यस्य शकनलक्षणे वस्त्वन्तरे संक्रमण कृतं भवति, तयोरेकत्वमापादितं भवतीत्यर्थ', तच्चासम्भवित्वादवस्तु, नहि य एव परमैश्वर्य्यपर्याय स एव शकनपर्यायो भवितुमर्हति, सर्वपर्यायसाङ्कर्यापत्तितोऽतिप्रसंगादित्यलं विस्तरेण, उक्तः समभिरूढः । 'वंजण अत्थे' त्यादि, यत् क्रियाविशिष्टं शब्देनोच्यते तामेवक्रिया कुर्वद् वस्त्वेवभूतमुच्यते, एवं यः शब्देनोच्यते चेष्टाक्रियादिकः—प्रकारस्तमेवभूत प्राप्तमितिकृत्वा, ततश्चैवंभूतवस्तुप्रति

पादको नयोऽप्युपचारादेवंभूत, अथवा एवं—य· शब्देनोच्यते चेष्टाक्रियादिकः प्रकारस्तद्विशिष्टस्यैव वस्तुनोऽभ्युपगमात्तमेवंभूत—प्राप्त एवंभूत इत्युपचारमन्तरेणापि व्याख्यायते, स एवं भूतोनय. किमित्याह व्यज्यतेऽर्थोऽनेनेति व्यञ्जनं शब्द अर्थस्तु तदभिधेयवस्तुरूप व्यञ्जनञ्चार्थश्च व्यञ्जनार्थौ तौ च तौ तदुभय चेति समासः व्यञ्जनार्थशब्दयोर्व्यस्तनिर्देश· प्राकृतत्वात्, तद्व्यञ्जनार्थतदुभयं विपयति-नैयत्येन स्थापयति, इदमत्र हृदयम्—शब्दमर्थेनार्थं च शब्देन विशेपयति, यथा "घट चेष्टायां" घटते योपिन्मस्तकाद्यारूढश्चेष्टते इति घट इति, अत्र तदेवासौ घटो यदा योपिन्मस्तकाद्यारूढतया जलाहरणचेष्टावान् नान्यदा, घटध्वनिरपि चेष्टां कुर्वत एव तस्य वाचकोनान्यादेत्येव चेष्टावस्थातोऽन्यत्र घटस्य घटत्वं घट शब्देन निवर्त्यते, घटध्वनेरपि तदवस्थातोऽन्यत्र घटेन स्ववाचकत्व निवर्त्त्यते इति भाव इति गाथार्थ ॥ उक्ता मूल नया एपाञ्चोत्तरोत्तरभेदप्रभेदा आवश्यकादिभ्योऽवसेयाः एते च सावधारणा सन्तो दुर्नया, अवधारणविरहितास्तु सुनया·, सर्वैश्च सुनयैर्मीलितै स्याद्वाद इत्यलं वहुभापितया ॥ अत्राह कश्चित्--ननूक्ता एते नया, केवलं प्रस्तुते किमेतै प्रयोजनमिति नावगच्छाम, उच्यते, उपक्रमेणोपक्रान्तस्य निक्षेपेण च यथासम्भव निक्षिप्तस्यानुगमेनानुगतस्य च प्रक्रान्तसामायिकाध्ययनस्य विचारणाऽमीपां प्रयोजनम । पुनरप्याह नन्वेपा नयैर्विचारण किं प्रतिसूत्रमभिप्रता सर्वाध्ययनस्य वा ? यद्याद्य· पक्ष· स न युक्त, प्रतिसूत्रं नयविचारस्य "न नया समोयरति इह" मित्यनेन निपिद्धत्वात, अथापर. पक्षः सोऽपि न युक्त, समस्ताध्ययन विपयस्यनयविचारस्य प्रागुपोद्घातनिर्युक्तौ

"नए समोयारणाणुमए" इत्यत्रोपन्यस्तत्वात्, न च सूत्रव्यतिरिक्त मध्ययनमस्ति यन्नयैर्विचार्य्येते, अत्रोच्यते, यस्तावतप्रतिसूत्रं नय-विचारनिषेध प्रेयेते तत्राविप्रतिपत्तिरेव, किं च—आसज्ज उ सोयार नए विसारओ वया ॥ छाया—आसाद्य तु श्रोतारं नयान् नय विशारदो ब्रूयात् इति, इत्यनेनापवादिक सोऽनुज्ञात एव, यदप्युच्यते-समस्ता-ध्ययनविपस्य नयविचारस्य प्रागुपोद्घाते" त्यादि, तन् समयानभि-ज्ञस्यैव वचनं, यस्मादिदमेव चतुर्थानुयोगद्वारं नयवक्तव्यताया मूल-स्थानम्, अत्र सिद्धानामेव तेषां तत्रोपन्यासः; यदप्युक्तं " नच सूत्र व्यतिरिक्तमध्ययन" मित्यादि, तदप्यसारंसमुदाय समुदायिनो कार्यादिभेदत कथञ्चिद्भेदसिद्धे, तथाहि—प्रत्येकावस्थायामनु-पलब्धमप्युद्वहन सामर्थ्यलक्षणं कार्य्य शिविकावाहकपुरुषसमुदाये उपलभ्यते, एवञ्च प्रत्येकसमुदितावस्थयो कार्य्यभेद शिविकावाह नादिषु सामर्थ्यासामर्थ्य लक्षणो विरुद्धधर्माध्यासश्च दृश्यते, यदि चाय मपि न भेदकस्तर्हि सर्वं विश्वमेक स्यात् ततश्च सहोत्पत्त्यादि प्रसङ्ग, तस्मात् कार्य्यभेदाद् विरुद्धधर्माध्यासाच्च समुदाय समुदायिनोभेदं प्रतिपत्तव्यः, एवं सख्या सञ्ज्ञादिभ्योऽपि तद्भेदो भावनीय, तस्मात कश्चित क्वचित् सूत्र विषय समस्ताध्ययन विपश्च नय विचारो न दुष्यति, भवत्वेव तथा ऽप्यध्ययनं नयैर्विचार्य्यमाण किं सर्वैरेव विचार्यते ? आहोस्विद् कियद्भिरेव ? यदि सर्वैरिति पक्ष. स न युक्त,, तेषाम संख्येयत्वेन तैर्विचारस्य कर्तुमशक्यत्वात्, तथाहि-यावन्तो वचन मागा स्तावन्त एव नया, यथोक्तम्—जावइया वयणप्पहा तावइया चेव होंति नयवाया ॥ जावइया नयवाया तावइया चेव परसमया ॥ १ ॥ छाया-

यावन्तो वचनपथास्तावन्तश्चैव भवन्ति नयवादाः । यावन्तो नय वादा स्तावन्तश्चैव पर समयाः ॥ १ ॥ नच निजनिजाभिप्राय विरचितानां वचनमार्गाणां संख्या समस्ति, प्रतिप्राणि प्रायोः भिन्नत्वादभिप्रायाणां, नापि कियद्‌भिरिति वक्तुं शक्यम्, अनवस्था प्रसङ्गात्, संख्यातोतेषु हि तेषु यावदेभिर्विचारणा क्रियते तावदेभिरपि किं नेत्यनवस्थाप्रेरणायां न नैयत्यावस्थापकं हेतु मुत्प श्यामः, अथापि स्यादसंख्येयत्वेऽप्येषां सकलनयसंग्राहिभिर्नयैर्विचारो विधीयते, ननु तेषामपि सग्राहिनयानामनेकविधत्वात् पुनरनवस्थैव, तथाहि-पुर्वविद्‌भिः सकलनयसग्राहीणि सप्तनयशतान्युक्तानि, यत् प्रतिपादकं सप्तशतारं नय चक्राध्ययनमासीद्, उक्तञ्च, एक्केक्को य सयविहो सत्त नय सया हवंति एवमेवेत्यादि, छाया—एकैकश्च शतविध. सप्तशतानि नया भवन्ति, एवमेव, सप्तानां च नयशतानां संग्राहकाः पुनरपि विध्यादयो द्वादशनयाः यत् प्ररूपकमिदानीमपि द्वादशारं नयचक्रमस्ति, एतत् संग्राहिणोऽपि सप्तनैगमादि नया, तत् संग्राहिणौ पुनरपिद्रव्यपर्यायास्तिकौ नयौ ज्ञानक्रियानयौ वा निश्चय व्यवहारौ वा शब्दार्थनयौवेत्यादि, इति संग्राहक नयानामप्यनेकविधत्वाद् सैवा-नवस्था, अहो अति निपुणमुक्तं, किन्तु प्रक्रान्ताध्ययने सामायिकं विचार्यते, तच्चमुक्तिफलं ततो यदेवास्य मुक्तिप्राप्तिनिबंधनरूपं तदेव विचारणीयं, तच्चज्ञानक्रियात्मकमेव, ततो ज्ञानक्रियानयाभ्यामे वास्य विचारो युक्ततरो नान्यै ॥ तत्र ज्ञाननयो ज्ञानमेव मुक्तिप्रापक तया प्रतिजानीते, ततस्तन्मताविष्करणार्थमाह—

**मूलः—णायंमि गिण्हिअव्वे अगिण्हिअव्वंमि चेव**

अत्थमि। जइअव्वमेव इइ जो उवएसो सो नओ नाम ॥१४०॥ सव्वेसिंपि नयाणं वहुविहवत्तव्वयं निसामित्ता। तं सव्व नयविसुद्धं जं चरण गुणट्ठिओ साहु ॥१४१॥ से तं नए। अणुओगद्दारा सम्मत्ता ( सू० १५२ )

टीका:—"ज्ञाते" सम्यग्-अवगते । गिण्हियव्वे" ग्रहीतव्ये उपादेय इत्यर्थ "अग्रहीतव्ये" अनुपादेये, सच हेय उपेक्षणीयश्च द्वयोरप्यग्रहणाविशेषात्, च शब्द उक्त समुच्चये, अथवा अग्रहीतव्य शब्देन हेय एवैको गृह्यते उपेक्षणीयं त्वनुक्तमप्ययमेव चकार ममुच्चिनोति, एवो गाथालकारमात्रे, "अत्थमित्ति "अर्थे" ऐहिकामुष्मिके, तत्र ऐहिको ग्रहीत्तव्य स्रक्- चन्दनाङ्गनादि अग्रहीतव्योऽहिविषकण्टकादिरुपेक्षणीयस्तृणादि, आमुष्मिको ग्रहीतव्य-सम्यगदर्शनचारित्रादि अग्रहीतव्यो मिथ्यात्वादिरुपेक्षणीयस्तुस्वर्गविभूत्यादि, एवंभूतेऽर्थे यतितव्यमेवेति, अत्रैव कारोऽवधारणे, तस्य च व्यवहित प्रयोगः तद् यथा ज्ञात एवेति, तदयमर्थो- ग्राह्याग्राह्योपेक्षणीयेऽर्थे ज्ञात एव तत् प्राप्तिपरिहारोपेक्षार्थिना यतितव्यं, प्रवृत्यादि लक्षण. प्रयत्न. कार्य्य इति, "इति" एवभूत सर्वव्यवहाराणां ज्ञान निवन्धनत्व प्रतिपादनपरो य उपदेशः स किमित्याह-" नय" इति प्रस्तावाज् ज्ञाननयो "नामेति। शिष्यामंत्रणे इत्यक्षरघटना ॥ भावार्थस्त्वयम्—इह ज्ञाननयोज्ञानप्राधान्यख्यापनार्थं प्रतिपादयति-नन्वैहिकामुष्मिकफलार्थिना तावत्सम्यग्विज्ञात एवार्थे प्रवर्तितव्यम्, अन्यथा प्रवृत्तौ फलविसंवाददर्शनाद् आगमेऽपि च प्रोक्तं-पढम नाणं तओदए"

त्यादि, जंअन्नाणी कम्म खवेई, त्यादि, तथा अपरमप्युक्तम् । पावाओ विणियत्ती पवत्तणा तह य कुसल पक्खंमि । विणयस्स य पडिवत्ती तिन्निवि नाणेसमप्पति ॥ १ ॥ छाया ॥ पापाद्विनिवृत्ति प्रवर्तना तथा च कुशलपक्षे । विनयस्य च प्रतिपत्तिस्त्रीण्यपि ज्ञानात् समाप्यन्ते ॥१॥ तथान्यैरप्युक्तं-"विज्ञप्ति फलदा पुंसा न क्रिया फलदा मता । मिथ्या ज्ञानात्प्रवृत्तस्य फलासंवाददर्शनात् ॥ १ ॥ इति, इतश्च ज्ञानस्यैव प्राधान्य यतस्तीर्थकरगणधरैरगीतार्थानां केवलानां विहारोऽपि निषिद्ध, तथा च तद् वचनम्—' गीयत्थो य विहारो बीओ गीयत्थमीसिओ भणिओ । इत्तो तइयविहारो नाणुन्नाओ जिणवरेहि ॥ छाया—गीतार्थश्च विहारो द्वितीयो गीतार्थमिश्रितो भणित । एताभ्यां तृतीयो विहारो नानुज्ञातो जिनवरै ॥१॥ न यस्मादन्धेनान्ध समाकृष्यमाण सम्यक् पंथानं प्रतिपद्यत इतिभाव, एव तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तं, क्षायिकमप्यङ्गी कृत्य विशिष्टफलसाधकत्व तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षा प्रतिपन्नस्योत्कृष्टतपश्चरणवतोऽपि न तावदपवर्ग प्राप्ति संजायते यावदखिल जीवादि वस्तुस्तोमसाक्षात्करणदक्षं केवलज्ञानं नोत्पन्न, तस्माज्ज्ञानमेव पुरुषार्थसिद्धेर्निबन्धन, प्रयोगश्चात्र यद् येन विना न भवति तत्तन्निबन्धनमेव, यथा बीजाद्यविनाभावी तीन्नबन्धन एवाङ्कुरो, ज्ञानाविनाभाविनी च सकलपुरुषार्थसिद्धिरिति, ततश्चायं नयश्चतुर्विधे सामायिके सम्यक्त्वसामायिकश्रुतसामायिके एवाभ्युपगच्छति, ज्ञानात्मकत्वेन प्रधानमुक्तिकारणत्वात , देशविरतिसर्वविरति सामायिके तु नेच्छति, ज्ञान कार्यत्वेन गौणत्वात् तयोरिति गाथार्थ ॥ विचारितं

ज्ञाननयमतेन सामायिकम, अथ क्रियानयमतेन तद् विचार्यते-तत्रासौ क्रियैव सकलपुरुषार्थसिद्धेः प्रधानं कारणमिति मन्यमानो ज्ञाननय मतव्याख्यातामेवमेवगाथामाह—"नायम्मी" त्यादि, इय च क्रियानय मतेनेत्थव्याख्यायते—इह ज्ञाते ग्रहीतव्ये अग्रहीतव्ये चैवार्थे सर्वामपि पुरुषार्थसिद्धिमभिलषता यतितव्यमेवप्रवृत्यादिलक्षणा क्रियैव कर्तव्येति, एवमत्र व्याख्याने एवकारः स्वस्थान एव योज्यते, एवचमति ज्ञातेऽप्यर्थे क्रियैव साध्या, ततो ज्ञान क्रियोपकरणत्वाद्गौणमित्यत सकलस्यापि पुरुषार्थस्य क्रियैव प्रधान कारणमित्येव य उपदेश स नय प्रस्तावात् क्रियानय', शेषपूर्ववत् । अयमपि स्वपक्षसिद्धये युक्तीरुद्भावयति— ननु क्रियैव प्रधान पुरुषार्थसिद्धिकारण, यत आगमेऽपि तीर्थकरगणधरै क्रिया विकलाना ज्ञान निष्फलमेव उक्तं, सुबहुपि सुयमहीयं किं काही चरण विमुक्कस्स । अन्धस्स जह पलित्ता दीवसयसहस्स कोडीवि ॥ १ ॥ छाया—सुबहपि श्रुतमधीतं किं करिष्यति चरण विप्रमुक्तस्य । अंधस्य यथा प्रदीप्ता दीपशत् सहस्रकोट्यपि ॥ नाण सविसयनियय न नाण मित्तेण कज्ज निप्फत्ती, मग्गण्णू दिट्ठतो होइ सचिट्ठो अचिट्ठो य ॥ ।२। छाया—ज्ञान स्वविषय नियत न ज्ञानमात्रेण कार्यनिष्पत्ति । मार्गज्ञो दृष्टान्तोभवति सचेष्टोऽचेष्टश्च ॥ २ ॥ जाणतोऽविय तरिउ काइयजोगं न जुंजई जो । सो वुज्झइ सोएण एव नाणी चरणहीणो । ३ ॥ छाया--जानन्नपि तरीतु कायिकयोग न युनक्ति यस्तु । स उह्यते स्रोतसा एव ज्ञानी चरणहीन ॥ ३ ॥ जहा खरो चंदण भारवाही " इत्यादि, छाया--यथा खरश्चन्दन भारवाही" इत्यादि, तथा अन्यैरप्युक्तम्—' क्रियैव फलदा पुसा न ज्ञान फलद मतम । यत स्त्रीभक्ष्य भोगज्ञो न ज्ञानात्सु खितोभवेद् ॥१॥ इति एव तावत् क्षायोपशमिकीं चरणक्रियामङ्गीकृत्य

प्राधान्यमुक्तम्। अथ क्षायिकीमप्याश्रित्य तस्या एव प्राधान्यमवसेयम्। यस्मादर्हतोऽपि भगवतः समुत्पन्न केवलज्ञानस्यापि न तावत् मुक्त्यावाप्तिः संपद्यते यावदखिलकर्मेन्धानानल ज्वाला कलापरूपायां शैलेश्यवस्थायां सर्वसंवररूपां चारित्र क्रियां न प्राप्नोति तस्मात् क्रियैव प्राधाना सर्व पुरुपार्थ सिद्धि कारणं, प्रयोगश्चात्र यद्यत्समनान्तरभावि तत्तत् कारणं यथा अन्त्यावस्था प्राप्त पृथिव्यादिसामग्रथनन्तरभावी तत् कारणोऽङ्कुर क्रियानन्तरभाविनी च सकलपुरुषार्थसिद्धिरिति, ततश्चैप चतुर्विधेसामायिके देशविरति सर्व विरतिसामायिके एव मन्यते, क्रियारूपत्वेन प्रधानमुक्तिकारणत्वात् सम्यक्त्व श्रुतसामायिके तु तदुपकारित्वमात्रतो गौणत्वान्नेच्छति इति गाथार्थ ॥ ननु पक्षद्वयेऽपि युक्तिदर्शनात् किमिह तत्त्वमिति न जानीम इति शिष्यजनसम्मोहमाशक्यज्ञानक्रियानयमतप्रदर्शनानन्तरं स्थित पक्षं दर्शयन्नाह—

"सव्वेसिंपिगाहा, न केवलमनन्तरोक्त नयद्वयस्य' किं तर्हि ? सर्वेपामपि' स्वतन्त्रसामान्यविशेपवादीनां नामस्थापनादिवादीना वा नयानां "वक्तव्यतां" परस्परविरोधिनी प्रोक्ति "निशम्य" श्रुत्वा तदिह "सर्वनयविशुद्ध" सर्वनयसम्मत तत्त्वरूपतया ग्राह्यं, यत् किमत्याह— यच्चरण गुणस्थित' साधु' चरण चारित्रक्रिया गुणोऽत्रज्ञानं तयोस्तिष्ठतीति चरणगुणस्थ, ज्ञानक्रियाभ्यां द्वाभ्यामपि युक्त एव साधुः मुक्तिसाधको न पुनरेकेन केनचिदितिभावः, तथाहि-यत्तावज्ज्ञानवादिनाप्रोक्तं-यद्येन विना न भवति तत्तन्निबन्धमेवेत्यादि, तत्र तदविनाभावित्त्वलक्षणो हेतुरसिद्ध एव, ज्ञानमात्राविनाभाविन्याः पुरुपार्थसिद्धेः क्वाप्यदर्शनात् न हि

दाह पाकाद्यर्थिना दहन परिज्ञानमात्रादेव तत् सिद्धिर्भवति, किन्तु तज्ज्वा-नयनसंधुक्षणज्वालादिक्रियानुष्ठानादपि, न च तीर्थकरोऽपि केवलज्ञान मात्रान्मुक्तिं साधयति, किन्तु यथाख्यात चारित्रक्रियातोऽपि , तस्मात् सर्वत्र ज्ञानक्रियाविनाभाविन्येव पुरुषार्थसिद्धिः, ततस्तदविनाभावित्वलक्षणो हेतुर्यथा पुरुषार्थसिद्धेर्ज्ञाननिबन्धनत्व साधयति तथा क्रियानिबन्धनत्वमपि, तामप्यन्तरेण तदसिद्धेरित्यनैकान्तिकोऽप्यसाविति, एवं क्रिया वादिनापि यद्यत्समनन्तरभावि तत्तत् कारणमित्यादि प्रयोगे यस्तदनन्तरभावित्त्वलक्षणो हेतुरुक्तः सोऽप्यसिद्धो नैकान्तिकश्च तथाहि-स्त्री भक्ष्य भोगादिक्रिया कालेऽपि ज्ञानमस्ति तदन्तेरणतत्र प्रवृत्तेरेवायोगात् , एव शैलेश्यवस्थाया सर्व सवर रूप क्रिया कालेऽपि केवलज्ञानमस्ति, तदन्तरेण तस्या ग्वाप्राप्तेः, तस्मात् केवल क्रियानन्तर भावित्वेन पुरुषार्थस्य काप्यसिद्धेर सिद्धो हेतु , यथा च तदनन्तरभावित्वलक्षणो हेतुः क्रियाकारणत्वं मुक्त्यादि पुरुषार्थस्य साधयति तथा ज्ञानकारणत्वमपि, तदप्यन्तरेण तस्य कदाचिदप्यभावातदित्यनैकान्तिकताऽप्यस्येति, तस्मात् ज्ञान क्रियोभयसाध्यैव मुक्त्यादि सिद्धिः, उक्तञ्च-हय नाणं कियाहीणं हया अन्नाणओ किया। पासतो पंगुलोदढ्ढो धावमाणो य अधओ ॥ १॥ छाया—हतं ज्ञान क्रिया हीन हता अज्ञानत. क्रियापश्यन् पंगुर्दग्धो धावश्चान्ध ॥ सयोग सिद्धी अ फलं वयति नहु एग चक्केण रहो पयाइ । अंधो य पंग य वणे समेच्चा, ते सपउत्ता नयर पविट्ठा ॥ २ ॥ छाया—संयोग सिद्ध्याफल फलं वदति नैवैक चक्रेण रथः प्रयाति, अन्धश्च पंगुश्च वने समेत्य तौ सम्प्रयुक्तौ नगर प्रविष्टौ ॥ २ ॥ इत्यादि, अत्राह नन्वेवं ज्ञान क्रिययोर्मुक्त्यसाधिका शक्तिः प्रत्येकमसती समुदायेऽपिकथंस्यात ?

नहि यद्येषु प्रत्येकं नास्ति तत्तेषुसमुदितेष्वपि भवति, यथा प्रत्येक मसत् समुदितेष्वपि सिकताकरणेषु तैलं, प्रत्येकमसती च ज्ञानक्रिययोर्मुक्त्यवापिका शक्तिः, उक्तञ्च —पत्तेयमभावाओ । निव्वाणं समुदियासुवि न जुत्तं । नाण किरियासु वोत्तुं सिकता समुदाय तेल्लं व ॥१॥ छाया—प्रत्येकमभावान्निर्वाणं समुदितयोरपि न युक्तम् । ज्ञान क्रिययोर्वक्तुं सिकता समुदाय तैलमिव ॥ १ ॥ उच्यते, स्यादेतत्, यदि सर्वथा प्रत्येकं तयोर्मुक्त्यनुपकारिताऽभिधीयेत यदा तु तयो प्रत्येकं देशोपकारिता समुदाये तु सपूर्ण हेतुता तदा न कश्चिद्दोषः, आह च वीसुं न सव्वहच्चिय सिकता तेल्लं व साहणाभावो । देसोवगारिया जा सा समवायं मि सपुण्णा ॥ छाया —विष्वक् न सर्वथैव सिकता तैलवत् साधनाभाव. । देशोपकारिता या सा समवाये सम्पूर्णा ॥१॥ अतः स्थितमिदं-ज्ञान क्रिये समुदिते एव मुक्ति कारणं न प्रत्येकमिति तत्त्वम् । तथा च पूज्या —नाणाहीणं सव्व नाण नओ भणइ किं च किरियाए ? । किरियाए चरण नओ तदुभयगाहो य सम्मत्त ॥१॥ ज्ञानाधीनं सर्वं ज्ञाननय भणति किं च क्रियया । क्रियया (अधीनं) चरण न यस्तदुभय ग्राहश्च सम्यक्त्वम ॥ १ ॥ तस्माद् भाव साधु सर्वैरपि नयैरिष्यत एव, स च ज्ञान क्रिया युक्त एवेत्यता व्यवस्थितमिद —तत्सर्वनयविशुद्धं यच्चरण गुण व्यवस्थित साधुरिति ॥ तदेव समर्थित नय द्वारं तत्समर्थने च समर्थितानि चत्वार्यप्युपक्रमादीनि द्वाराणि, तत् समर्थने च चानुयोग द्वारशास्त्रं समाप्तम ।

---

# अथश्रुतनिश्रितम्

मूलः— से किं तं सुअनिस्सिअं ? २ चउव्विहं पण्णत्तं, तंजहा उग्गह १ ईहा २ अवाओ ३ धारणा ४ ( सू० २७ )

टीका :—"से किं तं" मित्यादि, अथ किं तच्छ्रुतनिश्रितं मतिज्ञानम् ? गुरुराह—श्रुतनिश्रतं मतिज्ञानं चतुर्विधं प्रज्ञप्तं, तद्यथा अवग्रह ईहा अपायो धारणा च, तत्र अवग्रहणमवग्रह अनिर्देश्यसामान्य मात्ररूपार्थग्रहणमित्यर्थ, यदाह चूर्णिकृत् " सामन्नस्सरुवादि विसेसण रहियस्स अनिद्देसस्स अवग्गहणमवग्गह" इति । तथा ईहनमीहा, सद्भूतार्थ पर्यालोचनरूपा चेष्टा इत्यर्थ, किमुक्त भवति—अवग्रहादुत्तर कालमवायात्पूर्व सद्भूतार्थ विशेषोपादानाभिमुखोऽसदभूतार्थ विशेष परित्यागाभिमुख. प्रायोऽत्र मधुरत्वादय शंखादि शब्दधर्म्मा दृश्यन्ते न खरकर्क्केश निष्ठुरतादय शार्ङ्गादि शब्दधर्म्मा इत्येवरूपो मतिविशेष ईहा,- आहच भाष्यकृत- " भूयाभूय विसेसादाणच्चायाभिमुहमीहा" तथा तस्यैवा व प्रहीतस्येहितस्यार्थस्य निर्णयरूपोऽध्यवसायोऽवाय शाख एवायं शार्ङ्ग एवा ( व वा ) यमित्यादि रूपोऽवधारणात्मक प्रत्ययोऽवाय इत्यर्थ तस्यैवार्थस्य निर्णीतस्य धरण धारणा. साच त्रिधा—अविच्युतिर्वासना स्मृतिश्च, तत्र तदुपयोगादविच्यवनमविच्युति साचान्तर्मुहूर्त्तप्रमाणा,

ततस्तयाऽऽहितो यः संस्कारः स वासना, सा च संख्येयमसंख्येयं वा कालं यावद् भवति, ततः कालान्तरे कुतश्चित्तादृशार्थदर्शनादि कारणात् संस्कारस्य प्रबोधे यज् ज्ञानमुदयते-तदेवेदं यत् मया प्राग् उपलब्धमित्यादि रूपं सा स्मृतिः, उक्तञ्च तदनतरं तदत्थाविच्चवणं जो उ वासणा जोगो । कालंतरेण जं पुण अनुसरण धारणा सा उ ॥ १ ॥ छाया—तदनन्तरं तदर्थ विच्यवन यस्तु वासना योग । कालान्तरे यत् पुनरनुस्मरणं धारणा सा तु ॥ १ ॥ एताश्चाविच्युतिवासनास्मृतयो धारणालक्षण सामान्यान्यर्थयोगाद् धारणा शब्द वाच्या ॥

**मूलः—से किं तं उग्गहे ? उग्गहे दुविहे पण्णत्ते, तंजहा-अत्थुग्गहे अ वंजणुग्गहे अ (सू० २८)**

**टीका :**—"से किं त" मित्यादि; अथ कोऽयमवग्रहः ? सूरिराह अवग्रहो द्विविधा प्रज्ञप्त तद्यथा—अर्थावग्रहश्च व्यञ्जनावग्रहश्च, तत्र अर्य्यते इत्यर्थः. अर्थस्यावग्रहणं अर्थावग्रहः—सकल रूपादिविशेष निरपेक्षा निर्देश्यसामान्यमात्र रूपार्थ ग्रहणमेकसामायिकमित्यर्थः, तथा व्यज्यते अनेनार्थऽप्रदीपेनेव घट इति व्यञ्जन, तच्चोपकरणेन्द्रियस्य श्रोत्रादेः शब्दादिपरिणत द्रव्याणां च परस्परं सम्बन्धः, सम्बन्धे हि सति सोऽर्थ शब्दादि रूप श्रोत्रादीन्द्रियेण व्यञ्जयितु शक्यते, नान्यथा, तत सम्बन्धो व्यञ्जनं, तथाचाह भाष्यकृत्—"वंजिज्जइ जेणऽथो घडोव दीवेण वंजण तं च । उवगरणिंदिय सद्दाइ परिणयदव्व संबधो ॥ १ ॥ छाया—व्यज्यते येनार्थो घट इव दीपेन व्यञ्जनं तच्च । उपकरणेन्द्रिय शब्दादिपरिणतद्रव्यसम्बध ॥ १ ॥ व्यञ्जनेन—सम्बन्धेनावग्रहण—

सम्बध्यमानस्य शब्दादि रूपस्यार्थस्याव्यक्तरूप परिच्छेदो व्यञ्जनावग्रह., अथवा व्यज्यते इति व्यञ्जनानि, 'कृद्‌बहुल' मिति वचनात् 'कर्मण्यनट्' व्यञ्जनानां शब्दादिरूपतयापरिणताना द्रव्याणामुपकरणेन्द्रियसम्प्राप्तानामवग्रह - अव्यक्तरूप. परिच्छेदो व्यञ्जनावग्रह, व्यज्यतेऽनेनार्थ प्रदीपेनेव घटः इति व्यञ्जनं-उपकरणेन्द्रियं तेन स्वसम्बद्धस्यार्थस्य—शब्दादेरवग्रहणम्—अव्यक्तरूप. परिच्छेदो व्यञ्जनावग्रहः, इयमत्र भावना—उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसम्बन्धे प्रथम समयादारभ्यार्थावग्रहात् प्राक् या सुप्तमत्तमूर्च्छितादिपुरुषाणामिव शब्दादिद्रव्यसम्बन्धमात्र विषया काचिदव्यक्ता ज्ञानमात्रा सा व्यञ्जनावग्रहः, स चान्तर्मुहूर्त्तप्रमाण । अत्राह —ननु व्यञ्जनावग्रहवेलायां न किमपि संवेदन संवेद्यते, तत् कथमसौ ज्ञानरूपो गीयते ? उच्यते, अव्यक्तत्वान्न संवेद्यते, ततो न कश्चिद्दोष, तथाहि—यदि प्रथमसमयेऽपि शब्दादिपरिणतद्रव्यैरुपकरणेन्द्रियस्य सम्प्रक्तौ काचिदपि न ज्ञानमात्रा भवेत्. ततो द्वितीयेऽपि समये न भवेत्, विशेषाभावात्, एवं यावच्चरमसमयेऽपि, अथ च चरमसमये ज्ञानमर्थावग्रहरूपं जायमानमुपलभ्यते, तत प्रागपि कापि कियती ज्ञान मात्रा द्रष्टव्या, अथ मन्येथा —माभूत् प्रथमसमयादिषु शब्दादिपरिणत द्रव्य सम्बन्धेऽपि काचिदपि ज्ञानमात्रा, शब्दादिपरिणतद्रव्याणां तेषु समयेषु स्तोकत्वात, चरमसमये तु भविष्यति, शब्दादिरूपपरिणतद्रव्य समूहस्य तदानीं भूयसो भावात्, तदयुक्तं, यतो यदि प्रथमसमयादिषु शब्दादिद्रव्याणा स्तोकत्वात् सम्पृक्तावव्यक्ताऽपि काचिदपि ज्ञानमात्रा न समुल्लसेत्, तर्हि प्रभूतसमुदायसम्पर्केऽपि न भवेत , न खलु सिकता

कणेषु प्रत्येकमसति तैललेशे समुदायेऽपितैलं समुद्भवदुपलभ्यते, अस्ति च चरमसमये प्रभूतशब्दादिद्रव्यसम्पृक्तौ ज्ञानं तत प्राक्तने ष्वपि समयेषु स्तोकस्तोकतरैरपि शब्दादिपरिणतद्रव्यै सम्बन्धे काचिदव्यक्ता ज्ञानमात्राऽभ्युपगंतव्या, अन्यथा चरमसमयेऽपि ज्ञानानुपपत्तेः तथा चोक्तं—"जं सव्वहा न वीसुं सव्वेसुवि तं न रेणुतेलंव। पत्तेयमणिच्छंतो कहमिच्छसि समुदये नाणं ॥१॥ छाया— यत् सर्वथा न विष्वक् सर्वेष्वपि नत् न रेणुतैलवत्। प्रत्येकमनिच्छन् कथमिच्छसि समुदाये ज्ञानम् ॥ १ ॥ ततः स्थितमेतत्-व्यञ्जनावग्रहो ज्ञानरूपः केवल तेषु ज्ञानमव्यक्तमेव वोद्धव्य। च शब्दौ स्वगतानेकभेदसूचकौ। ते च स्वागता अनेक भेदो अग्रे स्वयमेव सूत्रकृता वर्णयिष्यन्ते, आह—प्रथमं व्यञ्जनावग्रहो भवति ततोऽर्थावग्रह, तत कस्मादिह प्रथममर्थावग्रह उपन्यस्तः ?, उच्यते, स्पष्टतयोपलभ्यमानत्वात्, तथाहि—अर्थावग्रहः स्पष्टरूपतयासर्वैरपि जन्तुभि संवेद्यते, शीघ्रतरगमनादौ सकृत् सत्वरमुपलम्भे मया किञ्चिद दृष्टं परं न परिभावितं सम्यगिति, व्यवहारदर्शनात्, अपि च-अर्थावग्रहः सर्वेन्द्रियमनोभावी व्यञ्जनावग्रहस्तु नेति प्रथममर्थावग्रहः उक्त ॥ सम्प्रतितु व्यञ्जनावग्रहाद् ऊर्ध्वमर्थावग्रह इति क्रममाश्रित्य प्रथमं व्यञ्जनावग्रह स्वरूपं प्रतिपिपादयिषु शिष्य प्रश्नं कारयति—

**मूल :**—"से किं तं वंजणुग्गहे ? वंजणुग्गहे चउविहे पण्णत्ते, तंजहा सोइंदिअ वंजणुग्गहे घाणिंदिय वंजणुग्गहे जिब्भिंदिय वंजणुग्गहे फासिंदिअ वंजणुग्गहे। से तं वंजणु-

ग्गहे ( सू २६ )

टीका :—'से किं तं' मित्यादि, अथ कोऽयं व्यञ्जनावग्रह ? आचार्य आह- व्यनञ्जावग्रहश्चतुर्विध प्रज्ञप्त, तद्यथा- "श्रोत्रेन्द्रय-व्यञ्जनावग्रह" इत्यादि अत्राह-सत्सु पञ्चस्विन्द्रियेषु पष्ठे च मनसि कस्मादयं चतुर्विधो व्यावर्ण्यते ?, उच्यते, इह व्यञ्जनमुपकरणेन्द्रियस्य शब्दादिद्रव्याणाञ्च परस्पर सम्बन्ध उच्यते सम्बन्धश्चतुर्णामेव श्रोत्रेन्द्रियादीना, न नयनमनसो तयोरप्राप्यकारित्वात्, आह-कथमप्राप्यकारित्व तयोरवसीयते ? उच्यते विषयकृतानुग्रहोपघाताभावात , तथाहि-यदि प्राप्तमर्थं चक्षुर्मनो वा गृह्णीयात् तर्हि यथा स्पर्शनेन्द्रिय स्रक् चन्दनादिक अङ्गारादिक च प्राप्तमर्थं परिच्छिन्दत्ततकृतानुग्रहोपघातभाग् भवति तथा चक्षुर्मनसी अपि भवेता विशेषाभावात न च भवत तस्मादप्राप्यकारिणी ते, ननु दृश्यते एव चक्षुषोऽपि विषयकृतानुग्रहोपघातौ, तथाहि-घनपटलविनिर्मुक्ते नभसि स्फुरतो निविडजरटिमोपेत-कर प्रसरमभिसर्प्यन्तमशुमालिनमनवरतमवलोकमानस्य भवति चक्षुषो विघात, शशाङ्ककरकदम्बक यद्वा तरङ्गमालोपशोभित जल तरुमण्डलञ्च शाद्वल निरतर निरीक्षमाणस्य चानुग्रह, तदेतदपरिभावितभाषित, यतो न वय सर्वथा विषयकृतानुग्रहोपघातौ न भवत, किन्त्वेतावदेव ब्रूमो—यदा विषय विषयतया चक्षुरवलम्बते तदा ततकृतावनुग्रहोपघातौ तस्य न भवत इति तदप्राप्यकारि, शेषकाल तु प्राप्तेनाप्यानेनोपघातो भविष्यति स्पर्शनेन चानुग्रह, तत्रांशुमालिनो रश्मय सर्वत्रापि प्रसरमुपलभाना यदाऽशुमालिन सम्मुखमीक्षते तदा ते चक्षुर्देशमपि प्रा-

प्नुवन्ति ततश्चक्षु सम्प्राप्तास्ते स्पर्शनेन्द्रियमिव चक्षुरुपघ्नन्ति, शीतांशुरश्मयश्च स्वभावत एव शीतलत्वादनुग्राहकाः, ततस्ते चक्षुःसम्प्राप्ताः सन्तस्ते स्पर्शनेन्द्रियमिव चक्षुरनुगृह्णन्ति, तरंगमालासंकुलजलावलोकने च जलकणसपृक्तसमीरावयवसंस्पर्शतोऽनुग्रहो भवति, शाड्वलतरुमण्डलावलोकनेऽपि शाड्वलतरुच्छाया सम्पर्कशीतीभूतसमीरणसंस्पर्शात्, शेषकालं तु जलवालोकनेऽनुग्रहाभिमान उपघाताभावादवसेय., भवति चोपघाताभावेऽनुग्रहाभिमानो यथाऽतिसूक्ष्माक्षरनिरीक्षणाद् विनिवृत्य यथासुखं नीलीरक्तवस्त्राद्यावलोकने, इत्थं चैतदङ्गीकर्त्तव्य अन्यथा समाने सपर्के यथा सूर्यमीक्षमाणस्य सूर्येणोपघातो भवति तथा हुतवहजलशूलाद्यालोकने दाहक्लेदपाटनादयोऽपि कस्मान्न भवन्तीति ? । अपि च यदि चक्षु प्राप्यकारि तर्हि स्वदेशगतरजोमलाञ्जनशिलाकादिकं किं न पश्यति ?, तस्मात्प्राप्यकार्येवचक्षु । ननुयदि चक्षुरप्राप्यकारितर्हि मनोवत कस्मादविशेषेण सर्वानपि दूर व्यवहितादीनर्थान् न गृह्णाति ? यदि हि प्राप्तेपरिच्छिन्द्यात्तर्हि यदेवानावृत्तमदूरदेशं वा तदेव गृह्णीयात् नावृत्तं दूरदेशं वा, तत्र चक्षुरश्मीनां गमनासंभव सम्पर्काभावात्, ततो युज्यते चक्षुषो ग्रहणाग्रहणे, नान्यथा, तथाचाक्तं—प्राप्यकारिचक्षु उपलब्ध्यनुपलब्ध्योरनावरणेनरानपेक्षणात् अदूरेतरापेक्षणाच्च" यदि हि चक्षुरप्राप्यकारि भवेत्तदाऽऽवरणभावाद्नुपलब्धिः अन्यथोपलब्धिरिति स्यात , नहि तदावरणमुपघातकरणसमर्थं, प्राप्यकारित्वे तु मूर्त्तद्रव्यसंनिधानाद् उपपत्तिमान व्याघातोऽनिदूरे च गमनाभावादिति, प्रयोगश्चात्र—न चक्षुरविषयपरिमाणं, अप्राप्यकारित्वात् मनोवत् तदेतदयुक्ततरम

दृष्टान्तस्य साध्यविकलत्वात्, न खलु मनोऽप्यशेषान् विषयान् गृह्णाति, तस्यापि सूक्ष्मेष्वागमगम्यादिष्वर्थेषु मोहदर्शनात्, तस्माद् यथा मनोऽप्राप्यकार्यपि स्वावरणक्षयोपशमसापेक्षत्वात् नियतविषय तथा चक्षुरपि स्वावरणक्षयोपशमसापेक्षत्वदप्राप्यकार्यपि योग्यदेशावस्थितनियतविषयमिति न व्यवहितानामुपलम्भप्रसङ्गो नापि दूरदेशस्थितानामिति। अपिच दृष्टमप्राप्यकारित्वेऽपि तथास्वभावविशेषाद्योग्यदेशापेक्षण, यथाऽयस्कान्तस्य न खल्वयस्कान्तोऽयसोऽप्राप्यकारेण प्रवर्तमान सर्वस्याप्ययसो जगद्वर्तिन आकर्षको भवति, किन्तु प्रतिनियतस्यैव, (यत्तु) शङ्करस्वामी प्राह— "अयस्कान्तोऽपि प्राप्यकारी, अयस्कान्तच्छायाणुभिः सह समाकृष्यमाण वस्तुन सम्बन्धभावात्, केवल ते छायाणव सूक्ष्मत्वान्नोपलभ्यन्ते" इति तदेतदुन्मत्तप्रलपितु, तद्ग्राहकप्रमाणाभावात्, नहि तत्र छायाणुसम्भवग्राहकं प्रमाणमस्ति, न चाप्रमाणकं प्रतिपत्तु शक्नुम., अथास्ति ग्राहक प्रमाणमनुमान, तथ यदाकर्षण तत् संसर्गपूर्वकं यथाऽयो गोलकस्य सन्दशेन आकर्षणं चायसोऽयस्कान्तेन. तत्र साक्षादयस्कान्ते ससर्गः प्रत्यक्षबाधित इत्यर्थात् छायाणुभि सह द्रष्टव्य इति, तदपि बालिशजल्पित, हेतोरनैकान्तिकत्वात् मन्त्रेण व्यभिचारात् तथाहि—मन्त्र स्मर्यमाणोऽपि विवक्षित वस्त्वाकर्षति न च तत्र कोऽपि ससर्ग इति अपिच—यथा छायाणव प्राप्तमय समाकर्षन्ति तथा काष्ठादिकमपि प्राप्त कस्मान्नाकर्षन्ति!, शक्तिप्रतिनियमादिति चेत ननु स शक्तिप्रति नियमोऽप्राप्तावपि तुल्य एवेति व्यर्थ छायाणुपरिकल्पन। अन्यस्त्वाह—अस्ति चक्षुष प्राप्यकारित्वे व्यवहितार्थानुपलब्धिरनुमान प्रमाण. तदयुक्त, अत्रापि हेतोरनैकान्तिकत्वात्. काचाभ्रपटलस्फटिकैरन्तरितस्याप्युपलब्धे, अर्थस्या

चक्षीथा —नायना रश्मयो निर्गत्य तमर्थं गृह्णन्ति, नायनाश्च रश्मयस्तैज-सत्वान्न तेजोद्रव्यैः प्रतिस्खल्यन्ते, ततो न कश्चिद्दोष, तदपि न मनोरमं महाज्वालादौ स्खलनोपलब्धेः, तस्मादप्राप्यकारि चक्षुरिति स्थितं ॥ एवं मनसोऽप्राप्यकारित्वं भावनीयं, तत्रापि विषय कृतानुग्रहोपघाताभावाद्, अन्यथा तोयादिचिन्तायामनुग्रहोऽग्निशस्त्रादिचिन्तायांचोपघातो भवेत्, ननु दृश्यते मनसोऽपि हर्षादिभिरनुग्रह, शरीरोपचयदर्शनात्, तथाहि—हर्षप्रकर्षवशान्मनसोऽपि पुष्टता भवति, तद्वशाच्च स्वशरीरस्योपचयः, तथोपघातोऽपि शोकादिभिर्दृश्यते, शरीरदौर्बल्योरक्षतादिदर्शनात्, अतिशोककरणतोहि मनसो विघात सम्भवति ततस्तद् वशाच्छरीर दौर्बल्य-मतिचिन्तावशाच्च हृद्रोग इति, तदेतदतीवासम्बद्धं यत इह मनसोऽप्राप्यका-रित्वं साध्यमानं वर्तते, विषयकृतानुग्रहोपघाताभावात्, न चेह विषयकृता-नुग्रहोपघातौ त्वयामनसोदर्श्येते तत कथं व्यभिचार ?, मनस्तु स्वयं पुद्गल मयत्वाच्छरीरस्यानुग्रहोपघातौ करिष्यति, यथेष्टानिष्टरूप आहार, तथाहि-इष्टरूप आहार परिभुज्यमानः शरीरस्यपापमाधत्ते, अनिष्टरूपस्तूपसंघातं (स्तूपघातं), तथा मनोऽप्यनिष्टपुद्गलोपचितमति शोकादिचिन्तानिब न्धन शरीरस्य हानिमादधाति, इष्टपुद्गलोपचित्तं च हर्षादिकारण पुष्टि, उक्तञ्च—“ इट्ठानिट्ठाहारऽब्भवहारे होंति पुट्ठिहाणिओ । जहतह-मणसो ताओ पुग्गलगुणउत्ति का दोसो ? ॥ १ ॥ छाया—इष्टानिष्टाहारा-भ्यवहारे भवत पुष्टिहानी । यथा तथा मनसस्ते पुद्गलगुणत्वादिति को दोष. ? ॥ १ ॥ तस्मान्मनोऽपि विषयकृतानुग्रहोपघाताभावादप्राप्यकारीति स्थितं, “ इह सुगतमतानुसारिणः श्रोत्रमप्यप्राप्यकारि प्रपद्यन्ते, तथा च तद्ग्रन्थ — “चक्षुःश्रोत्रमनोऽप्राप्यकारी ” ति तदयुक्तं, इहा प्राप्यकारि

तत्प्राप्तिरेव शक्यते यस्य विषयकृतानुग्रहोपघाताभावो, यथा चक्षुर्मनसोः, श्रोत्रस्य च शब्दकृत उपघातो दृश्यते, सद्योजात बालकस्य समीपे महा--प्रयत्नताडितझल्लरीझङ्कारश्रवणतो यद्वा विद्युत् प्रपाते तत् प्रत्यास-न्नदेशवर्तिना निर्घोषश्रवणतो बधिरीभावदर्शनात्, शब्दपरमाणवो हि उत्पत्तिदेशादारभ्य सर्वतो जलतरङ्गन्यायेन प्रसरमभिगृह्णाना. श्रोत्रेन्द्रिय-देशमागच्छन्ति, तत सम्भवत्युपघात, ननु यदि श्रोत्रेन्द्रिय देश प्राप्त-मेव शब्द गृह्णाति नाप्राप्तं तर्हि यथा गन्धादौ गृह्यमाणे न तत्र दूरासन्नादि तया भेदप्रतीतिरेव शब्देऽपि न स्यात. प्राप्तो हि विषय परिच्छिद्यमा-न सर्वोऽपि सन्निहित एव, तत कथं तत्र दूरासन्नादिभेदप्रतीतिर्भवितु-मर्हति ?, अथ च प्रतीयते शब्दो दूरासन्नादितया, तथा च लोके वक्ता-र श्रूयन्ते,—कस्यापि दूरे शब्द इति, अन्यच्च-यदि प्राप्तः शब्दो गृह्यते श्रोत्रेन्द्रियेण तर्हि चाण्डालोक्तोऽपि शब्द श्रोत्रियेण श्रोत्रेन्द्रियसस्पृष्टो गृह्यते इति श्रोत्रेन्द्रियस्य चाण्डालस्पर्शदोषप्रसग, तन्न श्रय श्रोत्रेन्द्रियस्य प्राप्यकारित्वं, तदेतः तिमहामोहस्य मलीमसभाषित त (च) तो यद्यपि शब्द प्राप्तो गृह्यते श्रोत्रेन्द्रियेण तथापि यत उत्थित शब्दस्तस्य दूरासन्नत्वे शब्देऽपि स्वभाववैचित्र्यसभवाद् गमन्नादि भेदप्रतीतिर्भवति. तथाहि—दूरा-दागत शब्द क्षीणशक्तिकत्वात्स्पष्ट उपलभ्यते अस्पष्टरूपो वा, ततो लोको वदति-दूरे शब्द श्रूयते अस्य च वाक्यस्याय भावार्थो—दूरादाग-त शब्द. श्रूयते इति, स्यादेतत्-एवमति प्रसग प्राप्नोति. तथाहि—स्तम्भ एवतु शक्यते—दूरे स्तम्भ उपलभ्यते, किमुक्त भवति ?—दूरगतं रूपमुपलभ्यते इति. ततश्चक्षुरपि प्राप्यकारि प्राप्नोति, नचेष्यते. तस्मा-दैतत् समीचीनमिति, तदयुक्त यत इह चक्षुषो रूपकृतानुग्रहोपघातौ

नोपलभ्येते, श्रोत्रेन्द्रियस्य तु शब्दकृत उपघातोऽस्ति, एतच्चप्रागेवोक्तं, ततो नातिप्रसंगापानमुपपत्तिमत्, अन्यच्च—प्रत्यासन्नोऽपि जन पवनस्य प्रति-कूलमवतिष्ठमानः शब्दं न शृणोति, पवनवर्त्मनि तु वर्तमानो दूरदेश स्थितोऽपि शृणोति, तथाचलोके वक्तारो-न वयं प्रत्यासन्ना अपि त्व-दीयं वच शृणुम., पवनस्य प्रतिकूलमवस्थानात्, यदि पुनरप्राप्तमेव शब्दं रूपमिव जनाः प्रमिणुयु, तर्हि वातस्य प्रतिकूलमप्यवतिष्ठमाना रूपमिवशब्दं प्रमिणुयुः, न च प्रमिण्वन्ति, तस्मात् प्राप्ता एव शब्द परमाणवः श्रोत्रेन्द्रियेण गृह्यन्ते इति अवश्यमभ्युपगन्तव्यम्, तथा च सति पवनस्य प्रतिकूलमवष्ठिमानानां श्रोत्रेन्द्रियं न शब्दपरमाणवो वै-पुल्येन प्राप्नुवन्ति, तेषामन्यथा वातेन नीयमानत्वात्, ततो न ते शृ-ण्वन्तीति न काचित् क्षति, यदपि चोक्तं चाण्डालस्पर्शदोष प्राप्नोती 'ति' तदपि चेतनाविकलपुरुषभाषितमिवासमीचीन, स्पर्शास्पर्शव्यवस्थाया लो-के काल्पनित्वात्, तथाहि—न स्पर्शव्यवस्था लोके पारमार्थिकी, तथाहि—यामेव भुवमग्रे चाण्डालः स्पृशन् प्रयाति तामेव पृष्ठत श्रोत्रियोऽपि, तथा यामेव नावमारोहति स्म चाण्डालस्तामेवारोहति श्रोत्रियोऽपि, तथा स एव मारुतश्चाण्डालमपि स्पृष्ट्वा श्रोत्रियमपि स्पृशति, न च तत्र लोके स्पर्शदोषव्यवस्था, तथा शब्दपुद्गलस्पर्शेऽपि न भवतीतिनकश्चिद्दोष., अपि च—यथा केतकीदलनिचयं शतपत्रादिपुष्पनिचयं वा शिरसि नि-वध्य वपुषि वा मृगमदचन्दनाद्यवलेपनमारचय्यविपणिवीथ्यमागत्य-चाण्डालोऽवतिष्ठते तदा तद्गतकेतकीदलादिगंधपुद्गलाः श्रोत्रियादि नासिकास्वपि प्रविशन्ति, ततस्तत्रापि चाण्डालस्पर्शदोषः प्राप्नोतीति तद्दोषभयान्नासिकेन्द्रियमप्राप्यकारि प्रतिपत्तव्यं, न चैतद् भवतोऽप्यागमे

प्रतिपादितं, ततो बालिशजल्पितमेतदिति कृतं प्रसङ्गेन ॥ केचित्पुनः श्रोत्रेन्द्रियस्य प्राप्यकारित्वमभ्युपगच्छन्तः शब्दस्याम्बरगुणत्वं प्रतिपद्यन्ते, तदयुक्तं, आकाशगुणतायां शब्दस्यामूर्त्तत्वप्रसक्तेः, यो हि यद्गुणः स तत्समानधर्मा, यथा ज्ञानमात्मनः, तथाहि—अमूर्त्त आत्मा, ततस्तद्गुणो ज्ञानमप्यमूर्त्तमेव, एवं शब्दोऽपि यद्याकाशगुणस्तदाऽऽकाशस्यामूर्त्तत्वाच्छब्दस्यापि तद्गुणत्वेनामूर्त्तता भवेत्, न चासौ युक्तिसङ्गता, तल्लक्षणायोगात्, मूर्तिविरहो ह्यमूर्त्ततायाः लक्षणं, न च शब्दानां मूर्तिविरहः, स्पर्शवत्त्वात्, तथाहि—स्पर्शवन्तः शब्दाः, तत्संपर्कादुपघातदर्शनाल्लोष्टवत्, न चायमसिद्धो हेतुः, यतो दृश्यते सद्योजातबालकानां कर्णदेशाभ्यर्णीकृतगाढास्फालितझल्लरीझात्कारश्रवणात् श्रवणस्फोटो, न चेत्थमुपघातकृत्त्वमस्पर्शवत्त्वे सम्भवति, यथा विहायसः, ततो विपक्षे गमनासम्भवान्नानैकान्तिकोऽपि. अतश्च स्पर्शवन्तः शब्दाः, तैरभिघाते गिरिगह्वरभित्त्यादिषु शब्दोत्थानाल्लोष्टवत्, अयमपि हेतुरुभयोरपि सिद्धः, तथाहि—श्रूयन्ते तीव्रप्रयत्नोच्चारितशब्दाभिघाते गिरिगह्वरादिषु प्रतिशब्दाः प्रतिदिक्, ततः स्पर्शवत्त्वान्मूर्त्ता एव शब्दाः, "रूपस्पर्शादिसन्निवेशो मूर्त्ति" रिति वचनप्रामाण्यात्, ततः कथमिवाकाशगुणत्वं शब्दानामुपपत्तिमत्, ? । अपि च—तदाकाशमेकमनेकं वा ? यद्येकं तर्हि योजनलक्षादपि श्रूयेत, आकाशस्यैकत्वेन शब्दस्य तद्गुणतया दूरासन्नादिभेदाभावात्. अथानेकं, एवं सति वक्तृदेश एव स नियत इति कथं भिन्नदेशवर्त्तिभिः श्रोतृभिः श्रूयते ?, वक्तृदेशाकाशगुणतया तस्य श्रोतृजनश्रोत्रेन्द्रियाकाशसम्बन्धाभावात् अथ च श्रोत्रेन्द्रियाकाशसम्बन्धतया तद्ग्रहणमभ्युपगम्यते, तदागतेन गुणताऽभ्युपगमः शब्दस्य श्रेयान्, तस्याकाशगुणत्वमन्तरेण शब्दस्याग-

स्थानमेव नोपपद्यते, अवश्यंहि पदार्थेन स्थितिमता भवितव्यं, तत्र रूपरस-स्पर्शगंधानां पृथिव्यादिमह भूतचतुष्टयमाश्रयः, शब्दस्य त्वाकाश-मिति, तदयुक्तं, एवं सति पृथिव्यादीनामप्याकाशगुणत्वप्रसक्ते, तेपामप्याकाशाश्रितत्वात, न खल्वाकशमन्तरेणपृथिव्यादीनामप्य-न्यदाश्रयः, अगुणत्वात्पृथिव्यादीनामाकाशगुणत्वमनुपपन्नमितिचेत, न, आकाशाश्रितत्त्वेन भवन्नीत्यावलादपि तद् गुणत्वप्रसक्ते, अथ ना-श्रयण मात्रं तद् गुणत्व निबन्धन किन्तु समवाय, सचास्ति शब्दस्याकाशे न तुपृथिव्यादीनामिति, ननुकोऽय समवायो नाम ? एकत्रलोलीभावे नावस्थानं यथा पृथिव्यादिरूपाद्योरितिचेत्, न तर्हि शब्दस्य काशगुत्व माकाशेनसहैकत्र लोलीभावेन तस्याप्रतिपत्ते, अथाऽऽकाशे उपलभ्यमानत्वा त्तद्गुणताशब्दस्य, तूलकादेरपि तर्ह्याकाशे उपलभ्यमानत्वात्तद्गुणत्वं प्राप्नोति, अथ तूलकादेः परमार्थत पृथिव्यादिस्थानमाकाशेतूपलम्भो वायुना सञ्चार्य्यमाणत्वात, यद्यव तर्हि शब्दस्यापि न परमार्थत. स्थान-माकाश किन्तु श्रोत्रादि, यत पुनराकाशेऽवस्थानमुपलभ्यते तद् वायुना सञ्चार्य्यमाणत्वादवसेय, तथाहि—यतो यतो वायु सञ्चरति ततस्तत शब्दोऽपिगच्छति, वातप्रतिकूलशब्दस्याश्रवणात, उक्त च—"यथा च प्रर्यते तूलमाकाशे मातरिश्वना । तथा शब्दोऽपि कि वायोः, प्रतीपं कोऽपि शब्दवित्" तन्नाकाशगुणः शब्द. किन्तु पुद्गलमय इति स्थितम् ॥

मूलः—से कि तं अत्थुग्गहे ? अत्थुग्गहे छव्विहेपण्णत्ते, तंजहा सोइंदिअअत्थुग्गहे चक्खिंदिअ अत्थुग्गहे, घाणिंदिअ अत्थुग्गहे । जिब्भिंदिअ अत्थुग्गहे फासिंदिअ अत्थुग्गहे नोइं

**मूल**—तस्स णं इमे एगट्ठिआ नाणाघोसा नानावंजणा पंच नामधिज्जा भवन्ति, तंजहा-ओगेण्हणया उवधारणया सवणया अवलंबणया मेहा । सेत्त उग्गहे (सू० ३१)

टीका :—'तस्य' सामान्येनावग्रहस्य "ण" मिति वाक्यालंकारे 'अमूनि' वक्ष्यमाणानि एकार्थिकानि 'नाना घोसाणि' त्ति घोषा:—उदात्तादयः स्वरविशेषाः, आह च चूर्णिकृत—"घोसा उदात्तादओ सरविसेसा" नाना घोषा येषा तानि नानाघोषाणि, तथा नानाव्यञ्जनानि—कादीनि येषां तानि नाना व्यञ्जनानि, पञ्चनामान्येव नामधेयानि भवन्ति, 'तद्यथे' ति तेषामेवोपदर्शने, 'ओगिण्हणया' इत्यादि, यदा पुनरवग्रहविशेषानपेक्ष्यामूनि पञ्चापिनामधेयानि चिन्त्यन्ते तदा परस्परभिन्नार्थानि वेदितव्यानि, तथाहि—इहावग्रहस्त्रिधा, तद्यथा—व्यञ्जनावग्रह सामान्यार्थावग्रहो विशेषसामान्यार्थावग्रहश्च, तत्र विशेषसामान्यर्थावग्रह औपचारिकः, सचानन्तरमेवाग्रे दर्शयिष्यते, तत्र 'ओगिण्हणय' त्ति अवगृह्यतेऽनेनेति अवग्रहण, करणेऽनट्, व्यञ्जनावग्रहप्रथमसमयप्रविष्टशब्दादिपुद्गलादानपरिणाम, तद् भावोऽवग्रहणता । तथा 'उवधारणय' त्ति धार्यतेऽनेनेनिधारण, उप-सामीप्येनधारण उपधारणं—व्यञ्जनावग्रहेऽपि द्वितीयादि समयेषुप्रतिसमयमपूर्वापूर्वप्रवेशशब्दादि पुद्गलादानपुरस्सरं प्राक्तनप्राक्तनसमयगृहीतशब्दादिपुद्गलधारणपरिणाम तद् भाव उपधारणता, तथा "सवणय" त्ति श्रूयतेऽनेनेति श्रवणम —एकसामायिक सामान्यार्थावग्रहरूपो, बोधपरिणामः तद्भाव. श्रवणता, तथा अवलंबणय' त्ति अवलम्ब्यते इति अवलम्बनं, 'कृदबहुल' मिति वचनात् कर्मण्यनट्, विशेषसामान्यार्थावग्रहः

**मूल**—तस्स णं इमे एगट्ठिआ णाणाघोसा नानावंजणा पंच नामधिज्जा भवन्ति, तंजहा-ओगेण्हणया उवधारणया सवणया अवलंबणया मेहा। सेत्त उग्गहे (सू० ३१)

टीका :—'तस्य' सामान्येनावग्रहस्य "णं" मिति वाक्यालंकारे 'अमूनि' वक्ष्यमाणानि एकार्थिकानि 'नाना घोसाणि' त्ति घोषाः—उदात्तादयः स्वरविशेषाः, आह च चूर्णिकृत—"घोसा उदात्तादओ सरविसेसा" नाना घोषा येषां तानि नानाघोषाणि, तथा नानाव्यञ्जनानि—कादीनि येषां तानि नाना व्यञ्जनानि, पञ्चनामान्येव नामधेयानि भवन्ति, 'तद्यथे' ति तेषामेवोपदर्शने, 'ओगिण्हणया' इत्यादि, यदा पुनरवग्रहविशेषानपेक्ष्यामूनि पञ्चापिनामधेयानि चिन्त्यन्ते तदा परस्परंभिन्नार्थानि वेदितव्यानि, तथाहि—इहावग्रहस्त्रिधा, तद्यथा—व्यञ्जनावग्रह सामान्यार्थावग्रहो विशेषसामान्यार्थावग्रहश्च, तत्र विशेषसामान्यर्थावग्रह औपचारिकः, सचानन्तरमेवाग्रे दर्शयिष्यते, तत्र 'ओगिण्हणय' त्ति अवगृह्यतेऽनेनेति अवग्रहणं, करणेऽनट्, व्यञ्जनावग्रहप्रथमसमयप्रविष्टशब्दादिपुद्गलादानपरिणाम., तद्भावोऽवग्रहणता। तथा 'उवधारणय' त्ति धार्यतेऽनेनेति धारणं, उप-सामीप्येनधारणं उपधारण—व्यञ्जनावग्रहेऽपि द्वितीयादि समयेषुप्रतिसमयमपूर्वापूर्वशब्दादि पुद्गलादानपुरस्सरं प्राक्तनप्राक्तनसमयगृहीतशब्दादिपुद्गलधारणपरिणाम तद्भाव उपधारणता, तथा "सवणय" त्ति श्रूयतेऽनेनेति श्रवणम—एकसामायिक सामान्यार्थावग्रहरूपो बोधपरिणामः तद्भाव श्रवणता, तथा अवलंबणय' त्ति अवलम्ब्यते इति अवलम्बनं, 'कृद्बहुल' मिति वचनात् कर्मण्यनट्, विशेषसामान्यार्थावग्रहः

कथं विशेषसामान्यार्थावग्रहोऽवलम्बनमिति ?, चेत् , उच्यते,—इह शब्दोऽयमित्यपि ज्ञान विशेषावगमनरूपत्वाद् अवायज्ञानं, तथाहि—शब्दोऽयं नाशब्दो—रूपादि . इति शब्दस्वरूपावधारणं विशेषावगम', ततोऽस्मात् यत्पूर्वमनिर्देश्यसामान्यमात्रग्रहणमेकसामयिकं स पारमार्थिकार्थाव ग्रह', तत ऊर्ध्वं तु यत्किमिदमिति विमर्शन सा ईहा, तदनन्तरं तु यच्छब्द स्वरूपावधारण शब्दोऽयमिति तदवायज्ञान, तत्रापि यद: उत्तरधर्म जिज्ञासा भवति—किमय शब्द शाङ्ख किं वा शार्ङ्ग ? इति तदा पाश्चात्य शब्द इति ज्ञानं विशेषावगमापेक्षया सामान्यम त्रालम्बनमित्यवग्रह इत्युपचर्य्यते, स च परमार्थत सामान्यविशेषरूपार्थालम्बन इति विशेष सामान्यार्थावग्रह इत्युच्यते, इदमेव च शब्द इति ज्ञानमवलम्ब्य किमयं शाख ? किं वा शार्ङ्ग ? इति ज्ञानमुदयते, ततो विशेषसामान्यार्थावग्रहोऽवलम्बन इत्युक्त., ततोऽवलम्बनस्य भावोऽवलम्बनता, ततोऽप्यूर्ध्वं किमयं शांख ? कि वा शार्ङ्ग इतीहित्वा यच्छाख एव शार्ङ्ग एव वेति ज्ञानं तदवायज्ञानं, तदपि च किमयं शांखोऽपि शब्द. मद्र किं वा तार ? इत्युत्तर-विशेप जिज्ञासायां पाश्चात्य पाश्चत्यमवायज्ञानमुत्तरोत्तरविशेपावगमापेक्षया सामान्यार्थावलम्बनमित्यवग्रह इत्युपचर्य्यते, किं मन्द्र ? किं वा तार ? इतीह मन्द्र एवाय तार एवायमित्यवाय:, एवमुत्तरोत्तरविशेप जिज्ञासाया पाश्चात्य पाश्चात्यमवाय ज्ञानमुत्तरोत्तर विशेपाव गमापेक्षया सामान्यार्थावलम्बनमित्यवग्रह इत्युपचर्य ते, यदा उत्तरधर्मजिज्ञासा न भवति तदा तदन्त्य विशेपज्ञानमवाय ज्ञानमेव, नावग्रह इत्युपचर्य्यते, उपचारनिबन्धनाभावात्, उत्तरविशेपा-काङ्क्षाया अपगमात्, ततस्तदनन्तरमविच्युतिरूपाधारणा प्रवर्तते, वास-

नास्मृती तु सर्वेष्वपि विशेषावगमेषु द्रष्टव्ये, तथा चाह प्रवचनोपनिषद्वेदी भगवान् जिनभद्रगणिक्षमाश्रमणः— "सामन्नमेत्तगहणं निच्छयओ समयमोग्गहो पढमो । तत्तोऽणंतरमीहिय वत्थु विसेसस्स जोऽवाओ ॥१॥ छाया—सामान्यमात्रग्रहणं निश्चयतः समयमवग्रहः प्रथमः । ततोऽनन्तमीहितवस्तुविशेषस्य योऽपायः ॥ १ ॥ सो पुणरीहावायाविक्खाओ उग्गहत्ति उवयरिओ । एस विसेसावेक्खा सामन्नं गेण्हए जेण ॥ २ ॥ छाय —स पुनरीहापायापेक्षयाऽवग्रह इति उपचरित । एष विशेषापेक्षया सामान्यं गृह्णाति येन ॥ २ ॥ तत्तोऽणंतरमीहा तओ अवाओ य तव्विसेसस्स । इह सामन्न विसेसाऽवेक्खा जावंतिमो भेओ ॥ ३ ॥ छाया— ततोऽनन्तरमीहा ततोऽपायश्च तद्विशेपस्य । इह सामान्यविशेपापेक्षा यावदन्तिमो भेदः ॥ ३॥ सव्वत्थेहावाया निच्छयओ मोत्तुमाइसामन्नं । संववहारत्थं पुण सव्वत्थावग्गहोऽवाओ ॥ ४ ॥ छाया सर्वत्रेहापायौ निश्चयतो मुक्त्वाऽऽदि सामान्यम् । सव्यवहारार्थं पुनः सर्वत्रावग्रहोऽपायः ॥ ४ ॥ तरतमजोगाभावेऽवाओ च्चिय धारणा तदंतमि । सव्वत्थ वासणा पुण भणिया कालंतरसई य ॥ ५ ॥" छाया—तारतम्ययोगाभावेऽपाय एव धारणा तदन्ते । सर्वत्र वासना पुनर्भणिता कालान्तरस्मृतिश्च ॥५॥ त्ति, तथा 'मेहा' त्ति मेधा प्रथमं विशेषसामान्यार्थावग्रहमितिरिक्त्योत्तरः सर्वोऽपि विशेषसामान्यार्थावग्रहः ॥ तदेवमुक्तानि पञ्चापि नामधेयानि भिन्नार्थानि, यत्र तु व्यञ्जनावग्रहो न घटते तत्राद्य भेदद्वयं न द्रष्टव्यं, 'सेत्तं उग्गहा' त्ति निगमनम् ।

मूल—'से किं तं ईहा ?, २ छव्विहा पण्णत्ता, तंजहा-सोइंदियईहा चक्खिदिय ईहा घाणिंदियईहा जिब्भिंदियईहा

फासिंदिअईहा नोइंदिअ ईहा, तीसे णं इमे एगट्ठिआ नाणाघोसा नाणावंजणा पंच नाम धिज्जा भवंति, तं जहा—आभोगणया मग्गणया गवेसणया चिता विमंसा, से तं ईहा ॥ ( सू० ३२ )

टीका :—अथ केयमीहा ?, ईहा षड्विधा प्रज्ञप्ता, तद्यथा—श्रोत्रेन्द्रियेहा इत्यादि, तत्रश्रोत्रेन्द्रियेणेहा श्रोत्रेन्द्रियेहा, श्रोत्रेन्द्रियाथोवग्रह मधिकृत्य या प्रवृत्ता ईहा सा श्रोत्रेन्द्रियेहा इत्यर्थ., एवं शेषा अपि साधनीयाः। 'तीसे णं' मित्यादि सुगमं। नवर सामान्यत एकार्थिकानि, विशेष चिन्तायां पुनर्भिन्नार्थानि, तत्र 'आभोगणय' ति आभोग्यतेऽनेनेति आभोगनं—अर्थावग्रहसमनन्तरमेव सद्भूतार्थविशेषाभिमुखमालोचन तस्यभाव आभोगनता, तथा मार्ग्यतेऽनेनेति मार्गणं—सद्भूतार्थ विशेषाभिमुखमेव तदूर्ध्वमन्वयव्यतिरेकधर्मान्वेषणं तद्भावो मार्गणता तथा—गवेश्यतेऽनेनति गवेषणं-तत ऊर्ध्वं सद्भूतार्थविशेपाभिमुखमेव व्यतिरेकधर्मत्यागतोऽन्वय धर्माध्यासालोचनं तद भावोगवेषणता, ततो मुहुर्मुहु क्षयोपशमविशेषतः स्वधर्मानुगतसद्भूतार्थविशेषच्चिन्तन चिन्ता, तत् ऊर्ध्वंक्षयोपशमविशेषात् स्पष्टतरं सद्भूतार्थविशेषाभिमुखमेव व्यतिरेक धर्मपरित्यागतोऽन्वयधर्मापरित्यागतोऽन्वयधर्मे विमर्शनं विमर्शः। 'से तं ईहे' त्तिनिगमनम् ॥

**मूल:**—"से किं तं अवाए ? २ अवाए छव्विहे पण्णत्ते, तंजहा सोइंदिअअवाए चक्खिंदिअअवाए घाणिंदिअअवाए जिब्भिंदिअअवाए फासिंदिअअवाए नोइंदिअअवाए

तस्स णं इमे एगट्ठिया नाणाघोसा नाणावजणा पंचनामधिज्जा भवन्ति, तं जहा—आउट्टणया पच्चाउट्टणया अवाए बुद्धि विण्णणे, से तं अवाए ॥ ( सू० ३२ )

टीका:—अत्र श्रोत्रेन्द्रियेणावाय श्रोत्रेन्द्रियावाय, श्रोत्रेन्द्रियनिमित्तामर्थावग्रहमधिकृत्य य प्रवृत्तोऽपाय स श्रोत्रेन्द्रियापाय इत्यर्थ, एवं शेषा अपि भावनीया । 'तस्स ण' मित्यादि प्रागवत्' अत्रापि सामान्यत एकार्थिकानि, विशेषचिन्तायां पुनर्नानार्थानि, तत्र आवर्त्तते—ईहातो निवृत्यापायभावं प्रत्यभिमुखो वर्त्तते येन बोधपरिणामेन स आवर्त्तनस्तद्भाव आवर्तनता, तथा आवर्तनं प्रति येगता अर्थ विशेषपूत्तरोत्तरेषु विवक्षिता अपायप्रत्यासन्नतरा बोधविशेषास्ते प्रत्यावर्तना तद्भाव: प्रत्यावर्तनता, तथा अपायो-निश्चय. सर्वथा ईहाभावाद् विनिवृत्तास्यावधारणा-अवधारितमर्थमवगच्छतो यो बोधविशेष: सोऽपाय इत्यर्थः, ततस्तमेवावधारितमर्थं क्षयोपशमविशेषात् स्थिरतया पुन, पुन स्पष्टतरमवबुध्यमानस्य या बोधपरिणति सा बुद्धि, तथा विशिष्टं ज्ञानं विज्ञान— क्षयोपशमविशेषादेवावधारितार्थविषय एव तीव्रतरधारणा हेतुर्बोधविशेष, 'से तं अवाए' इति निगमनम् ॥

मूल :—से किं तं धारणा ? धारणा छव्विहा पण्णत्ता, तं जहा सोइंदिअधारणा चक्खिंदिअधारणा घाणिंदिअधारणा जिब्भिंदिअधारणा फासिंदिअधारणा नोइंदिअधारणा । तीसे णं इमे एगट्ठिया नाणाघोसा नाणावंजणा पंच ना-

मधिज्जा भवंति, तंजहा धारणा साधारणा ठवणा पइट्ठा कोट्ठे, से तं धारणा ॥ ( सू० ३४ )

टीका – 'से किं त' मित्यादि सुगम यावद्धारणा इत्यादि, अत्रापि सामान्यत एकार्थानिविशेषार्थचिन्ताया पुनर्भिन्नार्थानि, तत्रापायानन्तरमवगतस्यार्थस्याविच्युत्याऽन्तमुहूर्त्तकालं यावद्धरण धारणा, ततस्तमेवार्थमुपयोगात् च्युतं जघन्यतोऽन्तमुहूर्त्तादुत्कर्षतोऽसंख्येयकालात् परतो यत्स्मरणं सा धारणा, तथा स्थापन स्थापना, आपायावधारितस्यार्थस्य हृदिस्थापनं, वासेनेत्यर्थ., अन्ये तु धारणास्थापनयोर्व्यत्यासेनस्वरूपमाचक्षते, तथा प्रतिष्ठापन प्रतिष्ठा—अपायावधारितस्यैवावर्थस्य हृदिप्रभेदेन प्रतिष्ठापनमित्यर्थः, कोष्ठ इव कोष्ठ अविनष्टसूत्रार्थधारणमित्यर्थ. । 'से तं धारण सेयंधारणा' ।



# दर्शनविषयः

**मूलः**—दुविहे दंसणे पन्नत्ते तं०—सम्मद्दंसणे चेव मिच्छादंसणे चेव १ सम्मद्दंसणे दुविहे पं तं०—णिसग्गसम्मद्दंसणे चेव अभिगमसम्मद्दंसणे चेव २ णिसग्गसम्मद्दंसणे दुविहे पं, तं०—पडिवाई चेव अपडिवाई चेव ३ अभिगमसम्मद्दंसणे दुविहे पं, तं०— पडिवाई चेव अप्पडिवाई चेव ४ मिच्छादंसणे दुविहे प, तं०— अभिग्गहियमिच्छदंसणे चेव ५ अणभिग्गहिय मिच्छादंसणे चेव अभिग्गाहियमिच्छांदसणे दुविहे पं, तं०—सपज्जवसिते चेव अपज्जवसिते चेव ६ एवं अणभिगहितमिच्छादंसणेऽवि७ (सू० ७० )

टीका :— 'दुविहे दंसणे' इत्यादि सूत्राणि सप्त सुगमान्येव, नवरं, दृष्टिर्दर्शनम्—तत्त्वेषु रुचि तच्च सम्यग्—अविपरीत जिनोक्तानुसारि, तथा मिथ्या—विपरीतमिति । 'सम्मदंसणे' इत्यादि, निसर्गः स्वभावोऽनुपदेश इत्यनर्थान्तरं, अभिगमोऽधिगमो गुरूपदेशादिरिति, ताभ्यायत्तत तथा, क्रमेण मरुदेवीभरतवदिति, 'निसर्गे' त्यादि, प्रतिपतनशीलं प्रतिपाति सम्यग् दर्शनमौपशमिकं क्षायोपशमिकं च, अप्रतिपाति क्षायिकं, तत्रैषा क्रमेण लक्षणं—इहौपशमिकीं श्रे-

व्यञ्जनावग्रह', आह—प्रथम अर्थावग्रहो भवति ततोऽर्थावग्रहस्तत कस्मादिह प्रथममर्थावग्रह उपन्यस्त ? उच्यते, स्पष्टतयोपलभ्यमानत्वात्, तथाहि—अर्थावग्रहः स्पष्टरूपतया सर्वैरपि जंतुभिः संवेद्यते शीघ्रतरगमनादौ सकृत्सत्वरमुपलभ्यते, किञ्चिद् दृष्टं न परिभावितं सम्यगिति व्यवहारदर्शनात् अपिच अर्थावग्रहः सर्वेन्द्रियमनोभावी व्यञ्जनावग्रहस्तु नेति प्रथममर्थावग्रह उक्त । सम्प्रति व्यञ्जनावग्रहादूर्ध्व अर्थावग्रह इति क्रममाश्रित्य प्रथमं व्यञ्जनावग्रहस्वरूपं प्रतिपिपादयिषु प्रश्नं कारयति शिष्य—' भंजणोग्गहे ण भंते ! कइविहे पं०' इत्यादि, इह व्यञ्जनमुपकरणेन्द्रियस्य शब्दादिपरिणतद्रव्याणां च परस्परं सम्बन्ध इत्युक्तं प्राक्, ततश्चतुर्णामेव श्रोत्रादीनामिन्द्रियाणां व्यञ्जनावग्रहो न नयनमनसोः, तयोरप्राप्यकारित्वात्, सा चाप्राप्यकारिता नन्द्यध्ययनटीकायां प्रदर्शितेति नेह प्रदर्श्यते, अर्थावग्रहः षड्विध', तद्यथा—'सोइंदियअत्थुग्गहे' इत्यादि, श्रोत्रेन्द्रियेणार्थावग्रहो व्यञ्जनावग्रहोत्तरकालमेकसामयिकमनिर्देश्यं सामान्यमात्रार्थग्रहणं श्रोत्रेन्द्रियार्थावग्रह एवं घ्राणजिह्वास्पर्शनेन्द्रियार्थावग्रहेष्वपि वाच्यं, चक्षुर्मनसोस्तु व्यञ्जनावग्रहो न भवति, ततस्तयो प्रथममेव स्वरूपद्रव्यगुणक्रियाकल्पनातीतमनिर्देश्यसामान्यमात्रस्वरूपार्थावग्रहणमर्थावग्रहोऽवसेय', ' नोइंदियअत्थावग्गहो' इति नोइन्द्रिय—मनः तच्च द्विधा—द्रव्यरूपं भावरूपञ्च, तत्र मन' पर्याप्तिनामकर्मोदयतो यत् मनःप्रायोग्यवर्गणादलिकमादाय मनस्त्वेन परिणमनं—तद् द्रव्यरूपं मनः, तथा चाह नन्द्यध्ययनचूर्णिकृत् '—मणपज्जत्तिनामकम्मोदयओ जोग्गे मणोदव्वे घित्तु मणत्तेण परिणामिया दव्वा दव्वमणो भन्नइ' इति, तथा द्रव्यमनोऽवष्टम्भेन जीवस्य यो मन परिणाम स भावमन तथा चाह नन्द्यध्ययनचूर्णिकृदेव—"जीवो पुण मणपरिणामकि-

रियावंतो भावमणो, किं भणियं होइ ?—मणदव्वालंबणो जीवस्समणवावारो भावमणो भण्णइ" इति, तत्रेह भावमनसा प्रयोजनं, तद्ग्रहणे ह्यवश्यं द्रव्यमनसोऽपि ग्रहणं भवति, द्रव्यमनोऽन्तरेण भावमनसोऽसंभवात्, भावमनो विनापि च द्रव्यमनो भवति यथा भवस्थकेवलिनां, तत उक्तं भावमनसा प्रयोजनं, तत्र नोइन्द्रियेण—भावमनसाऽर्थावग्रहो—द्रव्येन्द्रियव्यापारनिरपेक्षघटाद्यर्थस्वरूपपरिभावनाभिमुखः प्रथममेकसामयिको रूपाद्यर्थाकारादिविशेषचिन्ताविकलोऽनिर्देश्यसामान्यमात्रचिन्तात्मको बोधो नोइन्द्रियार्थावग्रहः, अवग्रहग्रहणं चोपलक्षणं तेन नोइन्द्रियार्थावग्रहस्य साक्षादितरयोस्तु ( ईहापाययोः ) उपलक्षणात उपादान, विचित्रत्वात् सूत्रगतेरित्यदोषः ।

प्रज्ञापना सूत्र पद १५ उद्देश २ सू० २००

**मूल** :—कइविहाणं भंते ! आया पण्णत्ता ?, गोयमा ! अट्ठविहा आया पण्णत्ता, तंजहा—दवियाया कसायाया योगाया उवओगाया णाणाया दंसणाया चरित्ताया वीरियाया ॥ जस्स णं भंते ! दवियाया तस्स कसायाया जस्स कसायाया तस्स दवियाया ?, गोयमा ! जस्स दवियाया तस्स कसायाया सिय अत्थि सिय नत्थि जस्स पुण कसायाया तस्स दवियाया नियमं अत्थि। जस्स णं भंते ! दविया तस्स जोगायाया ?, एवं जहा दवियाया कसायाया भणिया तहा दवियाया जोगाया भाणियव्वा । जस्स

ण भंते ! दवियाया तस्स उवओगाया एवं सव्वत्थ पुच्छा भाणियव्वा, गोयमा ! जस्स दवियाया तस्स उवओगाया नियमं अत्थि, जस्सवि उवओगाया तस्सवि दवियाया नियमं अत्थि, जस्स दवियाया तस्स णाणाया भयणाए जस्स पुण णाणाया तस्स दवियाया नियमं अत्थि, जस्स दवियाया तस्स दंसणाया नियमं अत्थि जस्सवि दंसणाया तस्स दवियाया नियमं अत्थि, जस्स दवियाया तस्स चरित्ताया भयणाए जंस्स पुण चरित्ताया तस्स दवियाया नियम अत्थि, एवं वीरियायाएवि समं। जस्स णं भंते! कसायाया तस्स जोगाया पुच्छा, गोयमा ! जस्स कसायाया तस्स जोगाया नियमं अत्थि, जस्स पुण जोगाया तस्स कसायाया सिय अत्थि सिय नत्थि, एवं उवओगायाएवि समं कसायाया नेयव्वा, कसायाया य णाणाया य परोप्परं दोवि भइयव्वाओ, जहा कसाया य उवओगाया य तहा कसायाया य दंसणाया य कसाया य चरित्ता य दोवि परोप्परं भइयव्वाओ, जहा कसायाया य जोगाया य तहा कसायाया य वीरियाया य भाणियव्वाओ, एवं जहा कसायायाए वत्तव्वया भणिया तहा जोगायाएवि उवरिमाहिं समं भाणियव्वाओ। जहा दवियायाए वत्तव्वया भणिया तहा उवयोगायाएवि उवरिल्लाहिं समं भाणियव्वा। जस्य नाणाया

तस्स दंसणाया नियमं अत्थि जस्स पुण दंसणाया तस्स णाणाया भयणाए, जस्स नाणाया तस्स चरित्ताया सिय अत्थि सिय नत्थि जस्स पुण चरित्ताया तस्स नाणाया नियमं अत्थि, णाणाया वीरियाया दोवि परोप्परं भयणाए । जस्स दंसणाया तस्स उवरिमाओ दोवि भयणाए, जस्स पुण ताओ तस्स दंसणाया नियमं अत्थि । जस्स चरित्ताया तस्स वीरियाया नियमं अत्थि जस्स पुण वीरियाया तस्स चरित्ताया सिय अत्थि सिय नत्थि ॥ एयासि—णं भंते ! दवियायाणं कसायायाणं जाव वीरियायाणं य कयरे २ जाव विसेसा० गोयमा ! सव्वत्थोवाओ चरित्तायाओ नाणायाओ अणंतगुणाओ कसायाओ अणंत० जोगायाओ वि० विरियायाओवि उवयोगदवियदंसणायाओ तिन्निवि तुल्लाओ वि० ॥ ( सू० ४६७ )

आया भंते ! नाणे अन्नाणे ?, गोयमा ! आया सिय नाणे सिय अन्नाणे णाणे पुण नियमं आया ॥ आया भंते ! नेरइयाणं नाणे अन्ने नेरईयाणं नाणे ? गोयमा ! आया नेरइयाणं सिय नाणे सिय अन्नाणे नाणे पुण से नियमं आया एवं जाव थणियकुमाराणं, आया भंते ! पुढवि० अन्नाणे अन्ने पुढविकाइयाणं अन्नाणे ?, गोयमा ! आया पुढविकाइयाणं नियमं

अन्नाणे अन्नाणेवि नियमं आया, एवं जाव वणस्सइका०, बेइंदिय तेइंदिय जाव वेमाणियाणं जहा नेरइयाणं। आया भंते दंसणे अन्ने दंसणे ? गोयमा ! आया नियमं दंसणे दंसणेवि नियमं आया। आया भंते ! नेर० दंसणे अन्ने नेरइयाणं दंसणे ?, गोयमा ! आया नेरइयाणं नियमा दंसणे दंसणेवि से नियमं आया एवं जाव वेमा० निरंतरं दंडओ ॥ ( सू० ४६८ )

टीका :—'कइविहा णं' मिति, 'आय' त्ति अतति—सततं गच्छति अपरापरान् स्वपरपर्यायानित्यात्मा, अथवा अतधतोर्गमनार्थत्वेन ज्ञानार्थ-त्वादतति—सन्ततमवगच्छति उपयोगलक्षणत्वादित्यात्मा, प्राकृतत्वाच्च सूत्रे स्त्रीलिंगनिर्देश. तस्य चोपयोगलक्षणत्वात् सामान्येनैकविधत्वेऽप्युपाधिभे-दादष्टधात्वं ,तत्र 'दवियाय' त्ति द्रव्य —त्रिकालानुगाम्युपसर्जनीकृतकषायाद पर्यायं तद्रूप आत्मा द्रव्यात्मा सर्वेषां जोवानां, 'कसायाय' त्ति क्रोधादिकषाय विशिष्ट आत्माकषायात्मा अक्षीणानुपशान्तकषायाणाम्' 'जोगाय' त्ति योगा-मन प्रभृतिव्यापारास्तत्प्रधान आस्मा योगात्मा योगवतामेव, 'उवओगाया' त्ति उपयोग.– साकारानाकारभेदस्तत्प्रधान आत्मा उपयोगात्मा सिद्धसंसा-रिस्वरूप. सर्वजीवानां, अथवा विवक्षितवस्तूपयोगापेक्षयोपयोगात्मा, 'ना-णाय' त्ति ज्ञानविशेषित उपसर्जनीकृतदर्शनादिरात्मा ज्ञानात्मा सम्यग्दृष्टे' एवं दर्शनात्मादयोऽपि नवरं दर्शनात्मा सर्वजीवानां, चारित्रात्मा विरतानां वीर्य—उत्थानादि तदात्मा सर्वसंसारिणामिति, उक्तं च—जीवनां द्रव्यात्मा-ज्ञेय. सकषायिणां कषायात्मा। योगः सयोगिनां पुनरुपयोगः सर्वजीवा-

तस्स दंसणाया नियमं अत्थि जस्स पुण दंसणाया तस्स णाणाया भयणाए, जस्स नाणाया तस्स चरित्ताया सिय अत्थि सिय नत्थि जस्स पुण चरित्ताया तस्स नाणया नियमं अत्थि, णाणाया वीरियाया दोवि परोप्परं भयणाए। जस्स दंसणाया तस्स उवरिमाओ दोवि भयणाए, जस्स पुण ताओ तस्स दंसणाया नियमं अत्थि। जस्स चरित्ताया तस्स वीरियाया नियमं अत्थि जस्स पुण वीरियाया तस्स चरित्ताया सिय अत्थि सिय नत्थि ॥ एयासि—णं भंते ! दवियायाणं कसायायाणं जाव वीरियायाणं य कयरे २ जाव विसेसा० गोयमा ? सव्वत्थोवाओ चरित्तायाओ नाणायाओ अणंतगुणाओ कसायाओ अणंत० जोगायाओ वि० विरियायाओवि उवयोगदवियदंसणायाओ तिन्निवि तुल्लाओ वि० ॥ ( सू० ४६७ )

आया भंते ! नाणे अन्नाणे ?, गोयमा ! आया सिय नाणे सिय अन्नाणे णाणे पुण नियनं आया ॥ आया भंते ! नेरइयाणं नाणे अन्ने नेरईयाणं नाणे ? गोयमा ! आया नेरइयाणं सिय नाणे सिय अन्नाणे नाणे पुण से नियमं आया एवं जाव थणियकुमाराणं, आया भंते ! पुढवि० अन्नाणे अन्ने पुढविकाइयाणं अन्नाणे ?, गोयमा ! आया पुढविकाइयाणं नियमं

अन्नाणे अन्नाणेवि नियमं आया, एवं जाव वणस्सइका०, बेइंदिय तेइंदिय जाव वेमाणियाणं जहा नेरइयाणं । आया भंते दंसणे अन्ने दंसणे ? गोयमा ! आया नियमं दंसणे दंसणेवि नियमं आया । आया भंते ! नेर० दंसणे अन्ने नेरइयाणं दंसणे ?, गोयमा ! आया नेरइयाणं नियमा दंसणे दंसणेवि से नियमं आया एवं जाव वेमा० निरंतरं दंडओ ॥ ( सू० ४६८ )

टीका :—'कइविहा ण' मिति, 'आय' त्ति अतति—सततं गच्छति अपरापरान् स्वपरपर्यायानित्यात्मा, अथवा अतधतोर्गमनार्थत्वेन ज्ञानार्थत्वादतति—सन्ततमवगच्छति उपयोगलक्षणत्वादित्यात्मा, प्राकृतत्वाच्च सूत्रे स्त्रीलिंगनिर्देश. तस्य चोपयोगलक्षणत्वात् सामान्येनैकविधत्वेऽप्युपाधिभेदादष्टधात्वं ,तत्र 'दवियाय' त्ति द्रव्य —त्रिकालानुगाम्युपसर्जनीकृतकषायादिपर्यायं तद्रूप आत्मा द्रव्यात्मा सर्वेषां जोवानां, 'कसायाय' त्ति क्रोधादिकषायविशिष्ट आत्माकषायात्मा अक्षीणानुपशान्तकषायाणाम्' 'जोगाय' त्ति योगामन' प्रभृतिव्यापारास्तत्प्रधान आत्मा योगात्मा योगवतामेव, 'उवओगाया' त्ति उपयोग.– साकारानाकारभेदस्तत्प्रधान आत्मा उपयोगात्मा सिद्धसंसारिस्वरूप. सर्वजीवानां, अथवा विवक्षितवस्तूपयोगापेक्षयोपयोगात्मा, 'नाणाय' त्ति ज्ञानविशेषित उपसर्जनीकृतदर्शनादिरात्मा ज्ञानात्मा सम्यग्दृष्टे. एवं दर्शनात्मादयोऽपि नवरं दर्शनात्मा सर्वजीवाना, चारित्रात्मा विरतानां वीर्य—उत्थानादि तदात्मा सर्वसंसारिणामिति, उक्त च—जीवनां द्रव्यात्मा- ह्येय' सकषायिणां कषायात्मा । योग: सयोगिनां पुनरुपयोग: सर्वजीवा-

नाम् ॥ १ ॥ ज्ञानं सम्यग्दृष्टेर्दर्शनमथ भवति सर्वजीवानाम् । चारित्रं विरतानां तु सर्वसंसारिणां वीर्यम् ॥२” इति ॥ एवमष्टधाऽऽत्मनं प्ररूप्यथ यस्यात्मभेदस्य यदन्यदात्मभेदान्-रं युज्यते च न युज्यते च तस्य तद्दर्शयितुमाह—‘जस्स ण’ मित्यादि, इहाष्टौ पदानि स्थाप्यन्ते, तत्र प्रथमपदं शेषैः सप्तभिः सह चिन्त्यन्ते तत्र यस्य जोवस्य ‘द्रव्यात्मा’ द्रव्यात्मत्वं जोवत्वमित्यर्थः तस्यकषायातमा स्यादस्ति ’ कदाचिदस्ति सकषायावस्थायां ‘स्यान्नास्ति’ कदाचिन्नास्ति क्षीणोपशान्तकषायावस्थायां, यस्य पुनः कषायात्माऽस्ति तस्य द्रव्यात्मा द्रव्यात्मत्वं —जीवत्वं नियमादस्ति, जीवत्वं विना कषायाणामभावादिति । तथा यस्य द्रव्यात्मा तस्य योगात्माऽस्ति, योगवतामिव, नास्ति अयोगिसिद्धानामिव, तथा यस्य योगात्मा तस्य द्रव्यात्मा नियमादस्ति, जीवत्वं विना योगानामभावात्, एतदेव पूर्वसूत्रोपमानेन दर्शयन्नाह—‘एवं जहा दवियाये’ त्यादि । तथा यस्य जीवस्य द्रव्यात्मा तस्य नियमादुपयोगात्मा, यस्याप्युपयोगात्मा तस्य नियमाद् द्रव्यात्मा, एतयोः परस्परेणाविनाभूतत्वात् यथा सिद्धस्य, तदन्यस्य च द्रव्यात्मास्त्युपयोगात्मा चोपयोगलक्षत्वाज्जीवानां , एतदेवाह—‘जस्स दवियाये’ त्यादि । तथा ‘जस्स दवियाया तस्स नाणाया भयणाए जस्स पुण नाणाया तस्स दवियाया नियमं अत्थि’ त्ति यस्य जीवस्य द्रव्यात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग्दृष्टीनो स्यान्नास्ति यथा मिथ्यादृष्टीनामित्येवं भजना, यस्य तु ज्ञानात्मा तस्य द्रव्यात्मा नियमादस्ति, यथा सिद्धस्येति ‘जस्स दवियाया तस्स दसणाया नियमं अत्थि’ त्ति यथा सिद्धस्य केवलदर्शनं ‘जस्स वि दंसणाया तस्स दवियाया नियमं अत्थि’ त्ति यथा चक्षुर्दर्शनादि

दर्शनवतां जीवत्वमिति, तथा 'जस्स दवियाया तस्स चरित्ताया भयणाए' त्ति यत सिद्धस्याविरतस्य वा द्रव्यात्मत्वे सत्यपि चारित्रात्मा नास्ति विरताना चास्तीति भजनेति, 'जस्स पुण चरित्ताया तस्य दवियाया नियमं' अत्थि, त्ति चारित्रिणां जीवत्वाव्यभिचारित्वादिति, 'एवं वीरयातेवि सम' ति यथा द्रव्यात्मनश्चारित्रात्मना सह भजनोक्ता नियमश्चैवं वीर्यात्मनाऽपि सहेति, तथाहि— यस्य द्रव्यात्मा तस्य वीर्यात्मा नास्ति, यथा सकरणवीर्यापेक्षया सिद्धस्य तदन्यस्य त्वस्तीति भजना, वीर्यात्मनस्तु द्रव्यात्माऽस्त्येव यथा संसारिणामिति ॥७॥ अथ कषायात्मना सहान्यानि षट्पदानि चिन्त्यन्ते—जस्सण'-मित्यादि, यस्य कषायात्मा तस्य योगात्माऽस्त्येव, नहि सकषायोऽयोगी भवति, यस्य तु योगात्मा तस्य कषायात्मा स्याद्वा न वा, सयोगानां सकषायाणामकषायाणां च भावादिति, 'एव उवओगाया, एवी' त्यादि, अयमर्थ— यस्य कषायात्मा तस्योपयोगात्माऽवश्य भवति, उपयोगरहितस्य कषायाणामभावात्, यस्य पुनरुपयोगात्मा तस्य कषायात्मा भजनया, उपयोगात्मतायां सत्यामपि कषायिणामेव कषायात्मा भवति निष्कषायाणा तु नासाविति भजनेति, तथा 'कसायाया य नाणाया य परोप्पर दोवि भइयव्वोओ' त्ति कथ यस्य कषायात्मा तस्य ज्ञानात्मा स्यादस्ति स्यान्नास्ति, यत कषायिण सम्यग्दृष्टेर्ज्ञानात्माऽस्ति मिथ्यादृष्टेस्तु तस्य नास्त्यसाविति भजना, तथा यस्य ज्ञानात्मास्ति तस्य कषायात्मा स्यादस्ति स्यान्नास्ति, ज्ञानिना कषायभावात् तदभावाच्चेति भजनेति, 'जहा कसायाया उवओगाया य तहा कसायाया य दसणाया य' त्ति अतिदेश, तस्माच्चेद लब्ध—'जस्स कसायाया तस्स दंसणाया नियम अत्थि' दर्शनरहितस्य घटादे कषायात्मनोऽभावात् 'जस्स पुण दसणाया तस्स कसायाया सिय अत्थि सिय नत्थि' दर्श।

कपायसद्भावात्तदभावाच्चेति, दृष्टान्तार्थस्तु प्राक् प्रसिद्ध एवेति, 'कसायाया य चरित्ताया य दोवि परोप्परं भइयव्वाओ' त्ति भजना चैवं—यस्य कपायात्मा तस्य चारित्रात्मा स्यादस्ति स्यान्नास्ति, कथं ?, कषायिणां चारित्रस्य सद्भावात् प्रमत्तयतीनामिव तदभावाच्चासंयतानामिवेति, तथा यस्य चारित्रात्मा तस्य कषायात्मा स्यादस्ति स्यान्नास्ति, कथं ?, सामायिकादि चारित्रिणां कषायाणां भावाद् यथाख्यातचारित्रिणां च तदभावादिति, 'जहा कसायाया य जोगाया य तहा कसायाया वीरियाया य भाणियव्वाओ' त्ति दृष्टांतः प्राक् प्रसिद्धः, दार्ष्टान्तिकस्त्वेवं यस्य कषायात्मा तस्य वीर्यात्मा नियमादस्ति, नहि कषायवान् वीर्य्य विकलोऽस्ति, यस्य पुनर्वीर्यात्मा तस्य कपायात्मा भजनया, यतो वीर्य्यवान् स कषायोऽपि स्याद् यथा संयत अकपायोऽपि स्याद् यथा केवलीति ॥ ६ ॥ अथ योगात्माऽग्रेतनपदैः पञ्चभिःसह चिन्तनीयस्तत्र च लाघवार्थमतिदिशन्नाह—' एवं जहा कसायाए वत्तव्वया भणिया तहा जोगायाएवि उवरिमाहिं समं भाणियव्व' त्ति, साचैवं—यस्य योगात्मा तस्योपयोगात्मा नियमाद् यथा सयोगानां, यस्य पुनरुपयोगात्मा तस्य योगात्मा स्यादस्ति यथा सयोगानां स्यान्नास्ति यथाऽयोगिनां सिद्धानाञ्चेति, तथा यस्य योगात्मा तस्य ज्ञानात्मा स्यादस्ति सम्यग्दृष्टीनामिव स्यान्नास्ति मिथ्यदृष्टीनामिव यस्य ज्ञानात्मा तस्यापि योगात्मा स्यादस्ति सयोगिनामिव स्यान्नास्त्यो—गिनामिवेति, तथा यस्य योगात्मा तस्य दर्शनाऽऽत्माऽस्त्येव योगिनामिव यस्य च दर्शनात्मा तस्य योगात्मा स्यादस्ति योगवतामिव स्यान्नास्त्ययोगिनामिव, तथा यस्य योगात्मा तस्य चारित्रात्मा स्यादस्ति विरतानामिव स्यान्नास्त्यविरतानामिव, यस्यापि चारित्रात्मा तस्य योगात्मा स्यादस्ति सयोगचा-

ग्त्रिवतामिव स्यान्नास्त्ययोगिनामिवेति, वाचनान्तरे पुनरिदमेवं दृश्यते— जस्स चरित्ताया तस्स जोगाया नियमं' त्ति तत्र च चारित्रस्य प्रत्युपेक्षणादि व्यपाररूपस्य विवक्षितत्वात्तस्य च योगाविनाभावित्वात् यस्य चारित्रात्मा तस्य योगात्मा नियमादित्युच्यत इति, तथा यस्य योगात्मा तस्य वीर्यात्माऽस्त्येव योगसद्भावे वीर्यस्यावश्यम्भवात्, यस्य तु वीर्यात्मा तस्य योगात्मा भजनया यतो वीर्य्यविशेषवान् सयोग्यपि स्याद् यथा सयोगकेवल्यादि .— अयोग्यपि स्याद् यथाऽयोगिकेवलीति ॥५॥ अथोपयोगात्मना सहान्यानि चत्वारि चिन्त्यन्ते तत्रातिदेशमाह—'जहदवियाये' त्यादि एवञ्च भावना कार्या—यस्योपयोगात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यग् दृशा स्यान्नास्ति यथा मिथ्यादृषां, यस्य च ज्ञानात्मा तस्यावश्यमुपयोगात्मा सिद्धानामिवेति, ॥१॥ तथा यस्योपयोगात्मा तस्य दर्शनात्मऽस्त्येव यस्यापि दर्शनतमा तस्यापयोगात्माऽस्त्येव यथा सिद्धादीनामिव ति २ तथा यस्योपयोगात्मातस्य चारित्रात्मा स्यादस्ति यथा सयतानामसंयतानां च यस्य तु चारित्रात्मा तस्योपयोगात्माऽस्त्येवति यथा संयतानां ३ तथा यस्योपयोगात्मा तस्य वीर्यात्मा स्यादस्ति ससारिणामिव स्यान्नास्ति सिद्धानामिव यस्य पुनर्वीर्यात्मा तस्योपयोगात्माऽस्त्येव ससारिणामिवेति ४। अथ ज्ञानात्मना सहान्यानि त्रीणि चिन्त्यन्ते 'जस्स नाणे' त्यादि, तत्र यस्य ज्ञानात्मा तस्य दर्शनात्मास्त्येव सम्यगदृशामिव, यस्य च दर्शनात्मा तस्य ज्ञानात्मा स्यादस्ति यथा सम्यगदृशां स्यान्नास्ति यथा मिथ्यादृशामत एवोक्तं 'भयणाए' त्ति १ तथा 'जस्स नाणाया तस्स चरित्ताया सिय अत्थि' त्ति, संयतानामिव सिय नत्थि, त्ति, असंयतानामिव 'जस्स पुण चरित्ताया तस्स नाणाया नियमं अत्थि, त्ति ज्ञानं विना चारित्रस्याभवादिति २ तथा 'णाणाये'

त्यादि अस्यार्थः—यस्य ज्ञानात्मा तस्यवीर्यात्मा स्यादस्ति केवल्यादीनामिव स्यान्नास्ति सिद्धानामिव, यस्यापि वीर्यात्मा तस्य ज्ञानात्मा स्यादस्ति सम्यग् दृष्टेरिव स्यान्नास्तिमिथ्यादृश इवेति ३ ॥ अथ दर्शनात्मना सह द्वे चिन्त्येते 'जस्स दंसणाये' त्यादि, भावना चास्य—यस्य दर्शनात्मा तस्य चारित्रात्मा स्यादस्ति संयतानामिव स्यान्नस्त्यसंयतानामिव, यस्य च चारित्रात्मा तस्य दर्शनात्मानस्त्येव साधूनामिवेति १ तथा यस्य दर्शनात्मा तस्य वीर्यात्मा स्यादस्ति संसारिणामिव स्यान्नास्ति सिद्धानामिव, यस्य च वीर्यात्मा तस्य दर्शनात्माऽस्त्येव संसारिणामिवेति २॥ अथान्तिम पदयोर्योजना 'जस्स चरित्तो त्यादि, यस्य चारित्रात्मा तस्य वीर्यात्माऽस्त्येव वीर्यं विना चारित्रस्याभावात्, यस्य पुनर्वीर्यात्मा तस्य चारित्रात्मा स्यादस्ति साधूनामिव स्यान्नास्त्यसयतानामिवेति अधुनैषामेवात्मनामल्पबहुत्वमुच्यते 'सव्वत्थोवाओ चतित्तायाओ' त्ति चारित्रिणां सख्यातत्वात् 'णाणायाओ अणत गुणाओ' त्ति सिद्धादोना सम्यग् दृशां चारित्रेभ्योऽनन्तगुणत्वात् 'कसायाओ अणंतगुणाओ' त्ति सिद्धेभ्य कपायोदयवतामनन्तगुण त्वात् जोगायाओ विसेसाहियाओ' त्ति अपगतरूपोयोदयैर्योगवद्भिरधिका इत्यथे 'वीरियाओ विसेसाहियाओ' त्ति अयोगिभिरधिका इत्यर्थः अयोगिनां वीर्यवत्त्वादिति, 'उवओगदवियदंसणायाओ तिण्णिवि तुल्लाओ विसेसाहियाओ' त्ति परस्परापेक्षया तुल्या, सर्वेषा सामान्यजीवरूपत्वान् वीर्यात्मभ्य सकाशादुपयोद्रव्यदर्शनात्मानो विशेषाधिका यतो वीर्यात्मान सिद्धाश्च मोलिता उपयोगाद्यात्मानो भवति, ते च वीयत्मिभ्य. सिद्धराशिनाऽधिका भवन्तीति, भवति चात्र गाथा —कोडी सहस्स पुहुत्तं इेण तो थोवियाओ चरणाया । णाणायाऽणंतगुणा पडुच्च सिद्धे य-

सिद्धाओ ॥१॥ छाया—यतीनांकोटी सहस्रपृथकत्व ततः स्तोकाश्चरणात्मा-
न. । ज्ञानात्मनोऽनन्तगुणाः सिद्धा' सिद्धान् प्रतीत्य ॥१॥'होंति कसायायाओ
ऽणंतगुणा जेण ते सरागाणं। जोगाया भणियाओ अयोगि वज्जाणतो अहिया
॥ २ ॥ छाया—कषायात्मानोऽनन्तगुणा भवन्ति यतस्ते सरागाणाम् ।
ततो योगात्मानोऽधिका अयोगिवर्ज्या यतोभणिता ॥ २ ॥ ' ज सेलेसि
गयाणवि लद्धी विरिय तओ समहियाओ । उवओगदविय दंसण सव्वजि-
या ण ततो अहिया ॥ ३ ॥ इति, छाया—यच्छैलेशीगतानामपि लब्धि-
वीर्य्यं ततस्ते समधिका । उपयोगद्रव्यदर्शनात्मानः सर्वे जीवास्ततोऽधि-
का ॥ ३ ॥ इति। अथात्मान एव स्वरूपनिरुणायाह—'आया भंते '
नाणे इत्यादि, आत्मा ज्ञानं योऽयमात्माऽसौ ज्ञानं न तयोर्भेदः अथात्म-
नोऽन्यज्ज्ञानमिति प्रश्नः, उत्तरं तु—आत्मा स्याज्ज्ञानं सम्यक्त्वे सति
मत्यादि ज्ञान स्वभावत्वात्तस्य, स्यादज्ञानं मिथ्यात्वे सति तस्य मत्यज्ञाना-
दि स्वभावत्वात्, ज्ञानं पुनर्नियमादात्मा आत्मधर्मत्वाज्ज्ञानस्य, न च सर्व-
था धर्मो धर्मिणोभिद्यते, सर्वथा भेदे हि विप्रकृष्ट गुणिनो गुणमात्रोपल-
ब्धौ प्रतिनियतगुणिविषय एवसशयो न स्यात्, तदन्येभ्योऽपि तस्य
भेदाविशेषात्, दृश्यते च यदा कश्चिद्धरिततरुतरुणशाखाविसररंध्रोदरान्तरतः
किमपि शुक्ल' पश्यति तदा किमियंपताका किमियं बालका ? इत्येवं प्रतिनि-
यतगुणिविषयोऽसौ, नापि धर्मिणो धर्म्म सर्वथैवाभिन्न , सर्वथैवाभेदेहि
संशयानुत्पत्तिरेव, गुण ग्रहणात एव गुणिनोऽपि गृहीतत्वादत कथञ्चि-
दभेदपक्षमाश्रित्य ज्ञानं पुनर्नियमादात्मेत्युच्यत, इति इह चात्मा ज्ञानं
व्यभिचरति ज्ञान त्वात्मानं न व्यभिचरति खदिरवनस्पतिवदिति सूत्रगर्भार्थ
इति ॥ अमुमेवार्थं दण्डके निरूपयन्नाह—'आये' त्यादि, नारकाणां ' आ-

त्मा' आत्मस्वरूपं ज्ञानं उतान्यन्नारकाणां ज्ञानं ? तेभ्यो व्यतिरिक्तमित्यर्थः इति प्रश्नः, उत्तरं तु आत्मा नारकाणां स्याज्ज्ञानं सम्यग्दर्शनाभावात् स्यादज्ञानं मिथ्या दर्शनाभावात् ज्ञानं—पुन. 'से' त्ति तन्नारक सम्बन्धि आत्मा न तद्व्यतिरिक्तमित्यर्थः ॥ 'आया भंते ! पुढविक्काइयाण' मित्यादि, 'आत्मा' आत्मस्वरूपज्ञानमुतान्यत्तेषां ? उत्तरं तु आत्मा तेषामज्ञानरूपो नान्यत्तेभ्य इति भावार्थ एवं दर्शनसूत्राण्यपि, नवरं सम्यग्दृष्टिमिथ्यादृष्टयोर्दर्शनस्याविशिष्टत्वादात्मा दर्शनं दर्शनमप्यात्मैवेति वाच्यं, यत्र हि धर्मे विपर्ययो नास्ति तत्र नियम एवोपनीयते न व्यभिचारो, यथेहैव दर्शने, यत्र तु विपययोऽस्ति तत्र व्यभिचारो नियमश्च यथा ज्ञाने आत्मा ज्ञानरूपोऽज्ञानरूपश्चेति व्यभिचार, ज्ञानं त्वात्मैवेति नियम इति ॥

**मूल** :—आया भंते ! रयणभापु० अन्ना रयणप्पभा पुढवी ! गोयमा ! रयणप्पभा सिय आया सिय नो आया सिय अवत्तव्वं आयति य नो आयाइ य, से केणट्ठेण भंते ! एवं वुच्चइ रयणप्पभा पुढवी सिय आया सिय नो आया सिय अवत्तव्वं आतातिय नो आतातिय ? गोयमा ! अप्पणो आदिट्ठे आया परस्स आदिट्ठे नो आया तदुभयस्स आदिट्ठे अवत्तव्वं रयणप्पभा पुढवी आयातिय नो आयातिय य, से तेणट्ठेणं तं चेव जाव नो आयातिय । आया भंते ! सक्करप्पभा पुढवी जहा रयणप्पभा पुढवी तहा सक्क,

रप्पभाएत्ति, एवं जाव अहे सत्तमा । आया भंते ! सोहम्मकप्पे पुच्छा, गोयमा ! सोहम्मे कप्पे सिय आया सिय नो आया जाव नो आयाति य, से केणट्ठेणं भंते ! जाव नो आयातिय ?, गोयमा ! अप्पणो आइट्ठे आया परस्स आइट्ठे नो आया तदुभयस्स आइट्ठे अवत्तव्व आताति य नो आताति य, से तेणट्ठेणं तं चेव जाव नो आयाति य, एवं जाव अच्चुएकप्पे । आया भंते ! गेविज्जविमाणे अन्ने गेविज्जविमाणे एवं जहा रयणप्पभा तहेव, एवं अणुत्तरविमाणावि, एवं ईसिपब्भारावि । आया भंते परमाणुपोग्गले अन्ने परमाणुपोग्गले ?, एवं जहा सोहम्म कप्पे तहा परमाणुपोग्गलेवि भाणियव्वे ॥ आया भंते दुपएसिए खंधे अन्ने दुपएसिए खंधे ? गोयमा ! दुपएसिए खंधे सिय आया १ सिय नो आया २ सिय अवत्तव्वं आयाइ य नो आयातिय ३ सिय आया य नो आया य ४ सिय आया य अवत्तव्वं आयाति य नो आया तिय ५ सिय नो आया य अवत्तव्वं आयाति य नो आयाति य ६, से केणट्ठेणं भंते ?, एव तं चेव जाव नो आयाति य अवत्तव्वं अयाति य नो आयाति य गोयमा ! अप्पणो आदिट्ठे आया १ परस्स आदिट्ठे णो आया २ तदुभयस्स आदिट्ठे अवत्तव्वं दुपएसिए खंधे आयाति य नो आयाति

य ३ देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे दुप्पएसिए खंधे आया य नो आया य ४ देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे दुपएसिए खंधे आया य अवत्तव्वं आयाइ य नो आयाइ य ५ देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे दुपएसिए खंधे नो आया य अवत्तव्वं आयाति य णो आयाति य ६ से तेणट्ठेणं त चेव जाव नो आयाति य ॥ आया भंते ! तिपएसिए खंधे अन्ने तिपएसिए खंधे ?, गोयमा ! तिपएसिए खंधे सिय आया १ सिय नो आया २ सिय अवतव्वं आयाति य नो आयाति य ३ सिय आया य नो आया य ४ सिय आया य नो आयाओ य ५ सिय आयाउ य नो आया य ६ सिय आया य अवत्तव्वं आयाति य नो आयाति य ७ सिय आयाइय अवत्तव्वाइं आयाओ य नो आयाओ य ८ सिय आयाओ य अवत्तव्वं आयाति य नो आयाति य ९ सिय नो आया य अवत्तव्वं आयाति नो आयाति य १० सिय आया य अवत्तव्वाइं आयाओ य नो आया य ११ सिय नो आयाओ य अवत्तव्वं आयाइ य नो आयाइ य १२ सिय आया य नो आया य अवत्तव्वं आयाइ य नो आयाइय १३ से केणट्ठेणं भंते !, एवं वुच्चइ तिपएसिए खंधे सिय

आदिट्ठे असब्भावपज्जवे देसा आदिट्ठा तदुभयपज्जवा तिपएसिए खंधे नो आया य अवत्तव्वाइं आयाओ य नो आयाओ य ११ देसा आदिट्ठा असब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे तिपएसिए खंधे नो आयाओ य अवत्तव्वं आयातिय नो आयाति य १२ देसे आदिट्ठे सब्भावपज्जवे देसेआदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे तिपएसिए खंधे आया य नो आया य अवत्तव्वं आयाति य नो आयाइ य १३ से तेणट्ठे णं गोयमा ! एवं वुच्चइ तिपएसिए खंधे सिय आया तं चेव जाव नो आयाति य ॥ आया भंते ! चउप्पएसिए खंधे अन्ने पुच्छा, गोयमा ! चउप्पएसिए खंधे सिय आया १ सिय नो आया २ सिय अवत्तव्वं आयाति य नो आयाति य ३ सिय आया य नो आयाय ४ सिय आया य अवत्तव्वं ४ सिय नो आया य अवत्तव्वं ४ सिय आया य नो आया य अवत्तव्वं आयाति य नो आयातिय १६ सिय आया य नो आयाय अवत्तव्वाइं आयाओ य नो आयाओ य १७ सिय आया य नो आयाओ य अवत्तव्व आयाति य नो आयाति य १८ सिय आयाओ य नो आयाय अवत्तव्वं आयाति य नो आयाति य १९ से केणट्ठे णं भंते ! एवं वुच्चइ चउप्पएसिए खंधे

सिय आया य नो आया य अवत्तव्वं तं चेव अट्ठे पडिउच्चारेयव्वं १, गोयमा ! अप्पणो आदिट्ठे आया १ परस्स आदिट्ठे नो आया २ तदुभयस्स आदिट्ठे अवत्तव्वं आयाति य नो आयाति य ३ देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भाव पज्जवे चउभंगो, सब्भावपज्जवेणं तदुभयेण य चउभंगो असब्भावेणं तदुभयेण य चउभंगो, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे देसे आदिट्ठे तदुभयपज्जवे चउप्पएसिए खंधे आया य नो आया य अवत्तव्व आयाति य नो आयाति य, देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे देसा आदिट्ठा तदुभयपज्जवा चउप्पएसिए खंधे भवइ आया य नो आया य अवत्तव्वाइं आयाओ य नो आयाओ य १७ देसे आदिट्ठे सब्भावज्जवे देसा आदिट्ठा असब्भावपज्जवा देसे आदिट्ठे तदुभयपज्जवे चउप्पएसिए खंधे आया य नो आयाओ य अवत्तव्वं आयाति य नो आयातिय १८ देसा आइट्ठा सब्भावपज्जवा देसे आइट्ठे असब्भावप० देसे आइट्ठे तदुभयपज्जवे चउप्पएसिए खंधे आयाओ य नो आया य अवत्तव्वं आयाति य नो आयातिय १९ से तेणट्ठेणं गोयमा ! एवं वुच्चइ चउप्पएसिए खंधे सिय आया सिय नो

आया सिय अवत्तव्वं निक्खेवे ते चेव भंगा उच्चारेयव्वा जाव नो आयाति य ॥ आया भंते ! पंचपएसिए खंधे अन्ने पंचपएसिए खंधे ?, गोयमा ! पंचपएसिए खंधे सिय आया १ सिय नो आया २ सिय अवत्तव्वं आयाति य नो आयाति य ३ सिय आया य नो आया य सिय अवत्तव्वं ४ नो आया य अवत्तव्वेण य ४ तियग संजोगे एक्को ण पडइ, से केणट्ठे णं भंते ! तं चेव पडिउच्चारेयव्वं ?, गोयमा ! अप्पणो आदिट्ठे आया १ परस्स आदिट्ठे नो आया २ तदुभयस्स आदिट्ठे अवत्तव्वं ३ देसे आदिट्ठे सब्भावपज्जवे देसे आदिट्ठे असब्भावपज्जवे एवं दुयग संयोगे सव्वे पडंति तियग संजोगे एक्को ण पडइ । छप्पएसियस्स सव्वे पडंतिजहा छप्पएसिए एवं जाव अणंतपएसिए । सेवं भंते । सेवं भंते त्ति जाव विहरति ॥ (सू० ४६६ ) ॥ दसमो उद्देसो समत्तो ॥ बारसमं सयं समत्तं ॥ १२—१० ॥

टीका :—आत्माधिकाराद् रत्नप्रभादिभावानात्मत्वादिभावेन चिन्तयन्नाह—'आयाभंते' इत्यादि, अतति—सततं गच्छति तांस्तान्पर्यायानित्यात्मा ततश्चात्मा–सद्रूपारत्नप्रभापृथिवी 'अन्न' त्ति अनात्मा असद्रूपेत्यर्थ. 'सिय आया सिय नो आय' त्ति स्यात्सती स्यादसती 'सिय अवत्तव्वं' त्ति आत्मत्वेनानात्मत्वेन च व्यपदेष्टुमशक्यं वस्त्विति भावः, कथमवक्तव्यम् ? इत्याह—आत्मेतिच नो आत्मेति च वक्तुमशक्यमित्यर्थ,

'अप्पणो आइट्ठ' त्ति आत्मनः—स्वस्य रत्नप्रभाया एव वर्णादिपर्यायैः 'आदिट्ठ' आदेशेसति तैर्व्यपदिष्टा सतीत्यर्थः आत्मा भवति, स्वपर्यायापेक्षया सतीत्यर्थः 'परस्स आइट्ठे नो आया' त्ति परस्य शर्करादिपृथिव्यन्तरस्य-पर्यायैरादिष्टे—आदेशेसति तैर्व्यपदिष्टा सतीत्यर्थः नो आत्मा—अनात्मा भवति, पररूपापेक्षयाऽसतीत्यर्थः, 'तदुभस्य आइट्टे अवत्तव्वं' त्ति तयोः स्वपरयोरुभयं तदेव वोभयं तदुभयं तस्य पर्यायैरादिष्टे—आदेशे सति तदुभयपर्यायैर्व्यपदिष्टेत्यर्थ 'अवक्तव्यम्' अवाच्यं वस्तु स्यात् तथाहि— न ह्यसौ आत्मेति वक्तुं शक्या, परपर्यायापेक्षयाऽनात्मत्वात्तस्याः, नाप्यनात्मेति वक्तुं शक्या, स्वपर्यायापेक्षया तस्या आत्मत्वादिति, अवक्तव्यं चात्मानात्मशब्दापेक्षयैव न तु सर्वथा अवक्तव्यशब्देनैव तस्या उच्यमानत्वात् अनभिलाप्यभावानामपि भावपदार्थवस्तु प्रभृतिशब्दैरनभिलाप्यशब्देन वाऽभिलाप्यत्वादिति, एवं परमाणु सूत्रमपि ॥ द्विप्रदेशिक सूत्रे षड्भंगाः तत्राद्यस्त्रयः सकलस्कन्धापेक्षा. पूर्वोक्ता एव, तदन्ये तु त्रयोदेशापेक्षाः तत्र च 'गोयमे' त्यत आरभ्य व्याख्यायते 'अप्पणो' त्ति स्वस्य पर्यायैः 'अदिट्ठे' त्ति आदिष्टे—आदेशे सति आदिष्ट इत्यर्थः द्विप्रदेशिकस्कन्ध-आत्मा भवति १ एवं परस्य पर्यायैरादिष्टोऽनात्मा २ तदुभयस्य—द्विप्रदेशिकस्कन्धतदन्यस्कन्धलक्षणस्य पर्यायैरादिष्टोऽसाववक्तव्यं वस्तु स्यात्, कथम् ? आत्मेति चानात्मेति चेति ३ तथा द्विप्रदेशत्वात्तस्य देश एक अदिष्टः, सद्-भावप्रधाना सत्तानुगताः पर्यवायस्मिन् स सद्भावपर्यव , अथवा तृतीयबहुवचनमिदं स्वपर्यवैरित्यर्थः, द्वितीयस्तु देश आदिष्टः असद्भावपर्यवः पर-पर्यायैरित्यर्थः , परपर्यवाश्च तदीय द्वितीयदेशसम्बन्धिनो वस्त्वन्तरसम्बन्धिनो वेति ततश्चासौ द्विप्रदेशिकः स्कन्ध. क्रमेणात्मा चेति नोआत्मा चेति

४, तथा तस्य देश आदिष्टः सद्भावपर्यवो देशश्चोभयपर्यवस्ततोऽसावात्मा चाववतव्यंचेति ५ तथा तस्यैव देश आदिष्टोऽसद्भावपर्यवोदेशस्तूभयपर्यव स्ततोऽसौ नोआत्मा चावक्तव्यं च स्यादिति ६ सप्तमः पुनरात्मा च नोआत्मा चावक्तव्यं चेत्येवंरूपो न भवति द्विप्रदेशिके, द्वयंशत्वादस्य त्रिप्रदेशिकादौ तु स्यादिति सप्तभंगी ॥ त्रिप्रदेशिस्कन्धे तु त्रयोदश भङ्गास्तत्रपूर्वोक्तेषु सप्तस्वाद्या सकलादेशास्त्रयस्तथैव, तदन्येषु तु त्रिषु त्रयस्त्रय एकवचनबहुवचनभेदात् सप्तमस्त्वेकविध एव स्थापनाचेयम् यच्चेह प्रदेशद्वये-

| | | | | |
|---|---|---|---|---|
| आ १ नो १ अव १ | नो १ २ १ | आ १ २ १ | अव १ २ १ | आ १ नो १ अव १ |
| | आ १ १ २ | आ १ १ २ | नो १ १ २ | |

ऽप्येकवचनं कचित्तत्तस्य प्रदेशद्वयस्यैकप्रदेशावगाढत्वादि हेतुनैकत्वविवक्षणात्, भेदविवक्षायां च बहुवचनमिति ॥ चतुष्प्रदेशिकेऽप्येवं, नवरमेकोनविंशतिभङ्गाः तत्र त्रयः सकलादेशाः तथैव शेषेषु चतुर्षु प्रत्येकं चत्वारो विकल्पाः ते चैवं चतुर्थादिषु त्रिषु

| | | | |
|---|---|---|---|
| १ | २ | १ | २ |
| १ | १ | २ | २ |

सप्तमस्त्वेवं—

| | | | |
|---|---|---|---|
| १ | २ | १ | १ |
| १ | १ | २ | १ |
| १ | १ | १ | २ |

पंचप्रदेशिके तु द्वाविंशतिस्तत्राद्यास्त्रयस्तथैव, तदुत्तरेषु च त्रिषु प्रत्येकं चत्वारो विकल्पा

स्तथैव, सप्तमे तु सप्त, तत्र त्रिकसंयोगे किलाष्टौ भंगका भवन्ति तेषु च सप्तैवेह ग्राह्याः, एकस्तु तेषु न पतत्यसंभवात् , इदमेवाह—'तिगसजोगे त्यादि, तत्रैतेषां स्थापना



यश्च न पतति— स पुनरयम् २२२, षट्प्रदेशिके त्रयो विंशतिरिति ॥ द्वादशशते दशमः १२, १० समाप्तं च द्वादशशत विवरणम् ॥

सू० ४६६ व्याख्या प्र शतक १२ उद्दे० १०

**मूल.**—अद्दायं पेहमाणे मणूसे अद्दायं पेहति अत्ताणं पेहइ पलिभागं पेहति ? गोयमा ! अद्दायं पेहति नो अप्पाणं पेहति पलिभाग पेहति, एवं एतेणं अभिलावेणं असि मणि दुद्धं पाणं तेल्लं फाणियं वसं (सूत्रं १६७ )

टीका— अद्दायं पेहमाणे' इत्यादि, ' अद्दाय' मिति आदर्शं 'पेहमाणे' इति प्रेक्षमाणो मनुष्यः किमादर्शं प्रेक्षते आहोश्विदात्मानं ? अत्रात्मशब्देन शरीरमभिगृह्यते, उत' पलिभाग' मिति प्रतिभागं प्रतिविम्बं ? भगवानाह—आदर्शं तावत् प्रेक्षत एव तस्य स्फुटरूपस्य यथावस्थिततया तेनोपलम्भात्, आत्मानं—आत्मशरीरं पुनर्न पश्यति, तस्य तत्राभावात्, स्वशरीरं हि स्वात्मनि व्यवस्थितं नादर्शे तत' कथमात्मशरीरञ्च तत्र पश्येदिति ? प्रतिभागं—स्वशरीरस्य प्रतिविम्बं पश्यति, अथकिमात्मकं प्रतिविम्बम् ? उच्यते, छायापुद्गलात्मकं, तथाहि—सर्वमैन्द्रियक वस्तु स्थूलं चयापचयधर्मकं रश्मिवञ्च, रश्मय इति छाया पुद्गलाः व्यवह्रियन्ते

छायापुद्गला· प्रत्यक्षत एव सिद्धाः, सर्वस्यापि स्थूलवस्तुनः छाया, अध्यक्षत प्रतिप्राणि प्रतीते . अन्यच्च यदि स्थूलवस्तु व्यवहिततया दूरस्थिततया वा नादर्शादिष्ववगाढरश्मिर्भवति, ततो न तत्र तद् दृश्यते तस्मादवसीयते सन्ति छाया पुद्गलाः इति, ते च छायापुद्गलास्तत्तत सामग्रीवशाद् विचित्र परिणमनस्वभावास्तथाहि—ते छाया पुद्गला दिवा वस्तुन्यभास्वरे प्रतिगताः सन्तः स्वसंबंधि द्रव्याकारमाविभ्राणाः श्यामरूपतया परिणमन्ते निशि तु कृष्णाभाः, एतच्च प्रसरति दिवसे सूर्य्यकरनिकरे निशि तु चन्द्रोद्योते प्रत्यक्षत एव सिद्ध, त एव छाया—परमाणवः आदर्शादिभास्वर द्रव्यप्रतिगताः सन्त· स्वसंबंधिद्रव्याकारमादधानाः यादृग् वर्ण. स्वसम्बन्धिनिद्रव्ये कृष्णो नीलः शित पीतो वा तदाभाः परिणमन्ते, एतदप्यादर्शादिष्वध्यक्षतः सिद्धं, ततोऽधिकृतसूत्रेऽपि ये मनुष्यस्य छायापरमाणवः आदर्शमुपसंक्रम्य स्वदेहवर्णतया स्वदेहाकारतया च परिणमन्ते तेषां तत्रोपलब्धिर्न शरीरस्य, ते च प्रतिविम्वशब्दा वाच्या अत उक्तं—न शरीरं पश्यति किन्तु प्रतिभागमिति, नैवेतत् स्वमनीषिकाविजृम्भितं, यत उक्तमागमे—'सामा उ दिया छाया अभासुरगता निसिं तु कालाभा । सा चेव भासुर गया सदेह वण्णा मुणेयव्वा ॥ १ ॥ छाया—श्यामा तु दिवा छाया अभास्वरगता निशि तु कालाभा । सैव भास्वरगता स्वदेहवर्णा ज्ञातव्या ॥ १ ॥ जे आदरिसस्सन्तो देहावयवा हवंति सकंता । तेसिं तत्थुवलंभो पगासजोगा न इयरेसिं ॥ २ ॥ छाया—ये आदर्शस्यान्तर्देहावयवा भवन्ति संक्रान्ताः । तेषां तत्रोपलम्भः प्रकाशयोगात् नेतरेषाम् ॥२॥ मूलटीकाकारोऽप्याह—यस्मात सर्वमेवहि ऐन्द्रियकं स्थूलं

द्रव्यं चयापचयधर्मिकं रश्मिवच्च भवति, यतश्चादर्शादिषु छाया स्थूलस्य दृश्यते अवगाढ रश्मिनः तत स्थूलद्रव्यस्य कस्यचिद्दर्शन भवति, नचान्तरितं दृश्यते किञ्चित अति दूरस्थं वा अत ' पलिभागं ' प्रति भागं ' पेहति ' पश्यतीति । एवमसिमण्यादि विषयाण्यपि षट् सूत्राणिभावनीयानि, सूत्रपाठोऽप्येवम्—'असिं देहमाणेमणूसे किं असिं देहइ अत्ताणं देहइ पलिभाग देहइ ? इत्यादि, गोयमा ! असिं देहइ नो अत्ताणं देहइ पलि भागं देहइ' इत्यादि ।।

प्रज्ञापना सूत्रपद १५ उद्देश १ सू० सं १६७।।

———

# ज्ञान विषयः

'यथोद्देशस्तथा निर्देश' इति न्यायतोज्ञानभेदानाह—

' तत्थ पंचविहं नाणं सुअं आभिणि बोहियं ।
ओहियनाणं तइयं मणनाणं च केवलं ॥'

उत्तराध्ययन—सूत्र मोक्षमार्ग गत्यध्ययन २८, गाथा, ४ ॥

टीका:—'तत्र' इति तेषु ज्ञानादिषु मध्ये ' पञ्चविधं' पञ्चप्रकारं, किं तत्? ज्ञानं, क एते पञ्च प्रकारा इत्याह—श्रूयते तदिति श्रुतं—शब्द मात्र, तच्च द्रव्यश्रुतमेव, यत पुनः शब्दमाकर्णयत. स्वयं वा वदतः पुस्तकादिन्यस्तानि वा चक्षुरादिभिरक्षराण्युपलभमानस्य शेषेन्द्रियगृहीतं वाऽर्थं विकल्पयतोऽक्षरानुरूपित विज्ञानमुपजायते तदिह भावश्रुतं श्रुतशब्देनोक्तं, तथाऽभिमुखो योग्यदेशावस्थित वस्त्वपेक्षया नियतः स्वस्वविषयपरिच्छेदकतयाऽवबोधः—अवगमोऽभिनिबोध. स एवाभिनिबोधिकं, विनयादित्वात् स्वार्थिकष्ठक्, ' ओहि' त्ति अवशब्दोऽध· शब्दार्थः, ततश्चाधः इत्यधस्ताद्धावति अधोऽधा विस्तृतविषयवेदकतयेत्यवधि., औणादिको डि , यद्वा 'अवेत्यध एव धानं धातूनामनेकार्थत्वात् परिच्छेदोऽवधिः, उपसर्गे घोः किरिति (पा. ३-३-९२) किः, अथवाऽवधिः—मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृतिरित्येवरूपा, तदुपलक्षितं ज्ञानमप्यवधिः, ज्ञायतेऽनेनेति ज्ञातिर्वा ज्ञानं ततोऽवधिश्चासौ ज्ञानं चावधिज्ञानं, तृतीयं तृतीय

स्थानवर्त्तित्वात्, ' मणणाणं' ति मनः शब्देन द्रव्यपर्याययो. कथञ्चिद् भेदात् मनोद्रव्यपर्याया गृह्यन्ते, तेषु तत्तत् संज्ञिविकल्पहेतुषु ज्ञानं मनो ज्ञानं, तानेव हि मनः पर्यायज्ञानी साक्षादेव बुध्यते नतु वाह्यान्, अनुमान गम्यमानत्वात्तेषाम्; उक्तं हि—'जाणति वज्भेऽणुमाणाओ' त्ति च. समुच्चये भिन्नक्रमस्तत' केवलं च, तत्र केवलम्—एकमकलुषं सकलम-साधारणमनन्तं च ज्ञानमिति प्रक्रम, उक्तं हि—' केवलमेगं सुद्धं सकलमसाधारणं अणंत च' छाया—केवलमेकं शुद्धं सकलमसाधारण मनन्तं च । आह—नन्द्यादिषु मतिज्ञानानन्तरं श्रुतज्ञानमुक्तं तदिह किमर्थमादित एव श्रुतोपादानं ? उच्यते, शेषज्ञानानामपि स्वरूपज्ञानस्य प्रायस्तदधीनत्वेन प्राधान्यख्यापनार्थमिति सूत्रार्थः ॥

साम्प्रतं ज्ञानशब्दस्य सम्बन्धि शब्दत्वाद् येषां तज्ज्ञानं तान्य-भिधातुमाह—

**मूल** —एयं पंचविहं नाणं दव्वाण य गुणाण य ।

पज्जवाणं च सव्वेसिं, नाणं नाणीहिं देसिय ॥५॥

**टीका** :—'एतद्' अनन्तरोक्तं पञ्चविधं ज्ञानं द्रवन्ति गच्छन्ति तांस्तान्पर्यायानिति द्रव्याणि—वक्ष्यमाणलक्षणानि तेषां 'च' तद्गताने-कभेदख्यापको, गुणानां—रूपादीना, च प्राग्वत्, परीति—सर्वतः, कोऽर्थः ? द्रव्येषु गुणेषु सर्वेष्ववन्ति—गच्छन्तीति पर्यवास्तेषा च 'सर्वेषाम्' अशे-षाणां, केवलापेक्षया चायं द्रव्यकात्स्न्र्ये, सर्व शब्दः शेष ज्ञानापेक्षया तु प्रकारकात्स्न्र्ये, प्रतिनियतपर्यायग्राहित्वात्तेषां, 'ज्ञानम्'

अवबोधकं 'ज्ञानिभिः' अतिशयज्ञानोपेतै' केवलिभिरिति यावत् 'देशितं कथितम् । अनेन च यदाहुः—ज्ञान ज्ञानस्वरूपस्यैव ग्राहकं, वाह्यभिमतस्य वस्तुनो ज्ञानातिरिक्तस्यासत्वाद्, अत एवोक्त—स्वरूपस्य स्वतो गतिरिति, तन्निरस्तम्, अन्त सुखादिप्रतिभासवद् वहि. स्थूलप्रतिभासस्यापि स्वसंविदितत्वात् , न च युगपद्वेद्यमानयोरेकस्य तात्त्विकत्वमित्तरस्य त्वन्यथात्वमिति निमित्तं विना कल्पयितु' शक्यं, अथैकत्राविद्योपदर्शितत्वं तत् कल्पनिमित्त', न यतस्तदितरत्रापि किं न कल्प्यते ?, निमित्तं विना कल्पनाया उभयत्राविशेषात् , तथा च ज्ञानस्यप्यभावेन सर्वशून्यतापत्तिरित्यलं प्रसंगेनेति सूत्रार्थ' ॥ अनेन द्रव्यादिविषयत्वं ज्ञानस्योक्तं, तत्र च द्रव्यादीनि किं लक्षणानी इत्यत आह—

**मूल —गुणाणं आसओ दव्वं, एगदव्वंस्सिया गुणा ।**

**लक्खणं पज्जवाणं तु उभओ अस्सिया भवे ॥६॥**

टीका :—'गुणानां' वक्ष्यमाणाना 'आश्रय' आधारो यत्रस्थास्त उत्पद्यन्ते उत्पद्य चावतिष्ठन्ते प्रलीयन्ते च तद् द्रव्यम्, अनेन रूपादय एव वस्तु न तद्व्यतिरिक्तमन्यदिति तथागतमतमपास्तं, तथाहि—यदुत्पादविनाशयोर्न यस्योत्पादविनाशौ न तत्ततोऽभिन्नं, यथा घटात्पटो, न भवतश्च पर्यायोत्पादविनाशयोर्द्रव्यस्योत्पादविनाशौ, न चायमसिद्धो हेतु, स्थासकोशकुशूलाद्यवस्थासु मृदादिद्रव्यस्यानुगामित्वेन दर्शनात् , न चास्य मिथ्यात्व कदाचिदन्यथादर्शनासिद्धे , उक्त हि—"योह्यन्यरूपसंवेद्यः, संवेद्यतान्यथा पुन । स मिथ्या न तु तेनैव, यो नित्यमवगम्यते ॥१॥"

तथैकस्मिन् द्रव्ये स्वाधारभूते आश्रिता स्थिता.—एकद्रव्याश्रिताः, के ते ?—'गुणाः' रूपादय., एतेन च ये द्रव्यमेववेच्छन्ति तद्व्यतिरिक्तांश्च रूपादीनविद्योपदर्शितानाहुस्तन्मतनिषेध कृत', सविन्निष्ठा हि विषयव्यवस्थितयो, न च रूपाद्युत्कलितरूप कदाचित्केनचिद् द्रव्यमवगतमवगम्यते वा, अथ तद्विवर्त्त एव रूपादयो न तु तात्त्विका. केचन तद्भेदेन सन्ति, नन्वेवं रूपादिविवर्त्तो द्रव्यमित्यपि किं न कल्प्यते ? अथ तथैव प्रतीते:, एवं सति प्रतीतिरुभयत्र साधारणेत्युभयमुभयात्मकमस्तु, लक्ष्यतेऽनेनेति लक्षण 'पर्यवाणा' वक्ष्यमाणरूपाणां 'तु' विशेषणे 'उभयो ' द्वयोः प्राकृतत्वाद् द्रव्यगुणयोराश्रिताः 'भवे' त्ति 'भवेयु.' स्युः । अनेन च य एवमाहुः —यदाद्यन्तयोरसत् मध्येऽपि तत्तथैव, यथा मरीचिकादौ जलादि, न सन्ति च कुशूलकपालाद्यवस्थयोर्घटादिपर्यायाः, ततो द्रव्यमेवादिमध्यान्तेषु सत्, पर्यायाः पुनरसत्यैराकाशकेशादिभि. सदृशा अपि भ्रान्तैः सत्यतया लक्ष्यन्ते, यथोक्तम्— "आदावन्ते च यन्नास्ति मध्येऽपि न तत्तथा । वितथै सदृशा' सन्तोऽवितथा इव लक्षिता ॥१॥" तेऽपाकृता , तथाहि—आद्यन्तयोरसत्त्वेनमध्येऽपित्रप्यसत्त्वं साधयतामिदमाकूतं—यत् क्वचिदसत्तत्सर्वस्मिन्नसदिति, ततश्च मृद्द्रव्येऽप्यद्रव्यस्यासत्त्वात्सर्वस्मिन्नप्यसत्त्वप्रसगः, अथेष्टमेवैतत् , सत्तामात्रस्यैव तत्त्वत इष्टत्वात्, उक्त हि--"सर्वमेकं सदविशेषात्" नन्वेवमभावे भावाभावाद्भावस्यापि सर्वत्राभाव प्रसङ्गः, तस्माद्बाधकप्रत्ययोदय एवासत्त्वे निबन्धनमिति न क्वचिदसत्त्वे तस्यावश्यंभाव , ततो द्रव्यवत्पर्यायाणामप्यबाधितबोधविषयत्वे सत्त्वमस्तु, तथा गुणेष्वपि नवपुराणादिपर्याया प्रत्यक्षप्रतीता कियत्कालभाविन', प्रतिसमयभाविनस्तु पुराणत्वाद्यन्यथानुपपत्ते

तोऽवसीयन्ते, ततश्च द्रव्यगुणपर्यायात्मकमेकं, शबलमणि वच्चित्रप-तंगादिवद् वस्त्विति स्थितमिति सूत्रार्थः ॥ आह—गृह्णीमो 'गुणानामश्रयो द्रव्य'मिति द्रव्यलक्षणं' तच्चैवंलक्षणं द्रव्यं किमेकमेवोत तस्यभेदा अपि सन्तीत्याह—

मूलः—धम्मो अधम्मो आगासं कालो पुग्गलजंतवो ।
एस लोगुत्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥७॥

टीकाः—'धर्म' इति धर्मास्तिकायः 'अधर्म' इत्यधर्मास्तिकायः 'आकाश' मित्याकाशास्तिकायः 'काल' अद्धासमयात्मकः 'पुद्गलजन्तवः', इति पुद्गलास्तिकायः जीवास्तिकायः, एतानि द्रव्याणीति शेषः प्रसंगतो लोकस्वरूपमप्याह—एष इत्यादि, सुगममेव, नवरमेष इति-सामान्यतः प्रतीतो लोक इत्येवं स्वरूपः, कोऽर्थः ?, अनन्तरोक्तद्रव्यषट्कात्मक, उक्तं हि—'धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत्क्षेत्रम् । तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥१॥ इति सूत्रार्थ ॥ आह किमेतेऽपि धर्मादयो भेदवन्त उतान्यथा ? उभयथाऽपीति ब्रूमः तथाचाह—

मूलः—"धम्मो अधम्मो आगासं, दव्वं इक्किक्कमाहियं ।
अणंताणि य दव्वाणि कालो पुग्गल जंतवो ॥८॥

टीकाः—धर्मोऽधर्म आकाशं द्रव्यमिति धर्मादिभिः प्रत्येकं योज्यते ए 'एकैकं एक संख्यायो एवैतेषु भावाद् आख्यातं तीर्थकृद्भिरिति गम्यते तत किं कालादिद्रव्याण्यप्येवमेवेत्याह—' अनन्तानि ' अनन्तसंख्यानि स्वगतभेदानन्त्यात 'चः' पुनरर्थे उत्तरत्र योद्यते, कानि ? द्रव्याणि,

कतमानि ? काल पुद्गल जन्तवश्चोक्तरूपाः, कालस्य चानन्त्यमतीतानागतापेक्षयेति सूत्रार्थः ॥ एषां परस्परभेदनिबन्धनं लक्षणभेदमाह—

**मूल** :—गइलक्खणो उ धम्मो, अहम्मो ठाणलक्खणो ।
भायणं सव्वदव्वाणं, नहं ओगाहलक्खणं ॥९॥
वत्तणालक्खणो कालो, जीवो उवओगलक्खणो ।
नाणेणं दंसणेण च सुहेण य दुहेण य ॥१०॥
नाणं च दंसणं चेव चरित्तं च तवो तहा ।
वीरियं उवओगे य, एयं जीवस्स लक्खणं ॥११॥
सद्दंधयार उज्जोओ, पभा छाया तवुत्ति वा ।
वण्णरसगंधफासा, पुग्गलाणं तु लक्खणं ॥१२॥

**टीका**:— गमनं गति -देशान्तरप्राप्तिः लक्ष्यतेऽनेनेति लक्षणं, गतिर्लक्षणमस्येति गतिलक्षणः, तु, पूरणे, कोऽसौ ? धर्मास्तिकायः, आह—सिद्धे सति वस्तुनोऽस्तित्वे इदमनेन लक्ष्यत इति वक्तुं युक्तम्, अस्य तु सत्त्वमेवासिद्धम्, अत्रोच्यते, यद्यच्छुद्धपद वाच्यं त यथा स्तम्भादिः, शुद्धपदवाच्यश्च धर्मनामास्तिकायो, नचा धर्म इत्यस्यैतद् वाचकस्यासमस्तपदत्वेन तथाऽभिधेयार्थबाधक भावात्, प्रमाणान्तर बाधितविषयत्वाख्यदोषरहितत्त्वेन च नच खपुष्पादिषु संकेतितैर्डुःखादि शुद्धपदैरनेकान्तो, सङ्केतविषयाणामेवशुद्धपदानां वाच्यत्वस्येह हेतुत्वेनेष्ट

प्रतिपत्त्राभाव्यम्, अन्यथा धूमादेरपि गोपालघटादिष्वन्यथाभाव-दर्शनादेप प्रसङ्गो दुर्निवार स्यात्, उक्तञ्च—'अत्थित्ति निव्वियप्पो जीवो नियमा उ सद्दतो सिद्धी। कम्हा? सुद्ध पयत्ता घडखरसिंगाणुमाणाओ ॥ १ ॥ छाया—अस्तीति निर्विकल्पो जीवो नियमात् शब्दत एव सिद्धि.। कस्मात्? शुद्धपदत्वात् घटखरशृंगानुमानात् ॥ १ ॥ इत्याद्यलं प्रसङ्गेन, तथा 'अधर्मः' अधर्मास्तिकाय. स्थिति' स्थानं गतिनिवृतिरित्यर्थः। तल्ल-क्षणमस्येति स्थानलक्षण., स हि स्थितिपरिणताना जीवपुद्गलाना स्थितिलक्षणकार्य्यं प्रत्यपेक्षाकारणत्वेन व्याप्रियत इति तेनैव लक्ष्यत इत्युच्यते, अनेनाप्यनुमानमेव सूचितं, तच्चेदम्—यद्यत्कार्य्यं तत्तदपेक्षा कारणवद्, यथाघटादि, कार्यचासौ स्थिति, यच्च तदपेक्षाकारणं तदधर्मा-स्तिकाय इति, अत्र च नैयायिकादिः सौगतो वा वदेत्—नास्ति अधर्मा-स्तिकाय., अनुपलभ्यमानत्वात्, शशविषाणवत्, तत्र यदि नैयायिकादि-स्तदाऽसौ वाच्यः—कथं भवतोऽपि दिगादयः सन्ति? अथ दिगादिप्रत्यय-लक्षणकार्यदर्शनात्, भवति हि कार्यात् कारणानुमानम्। एवं सति स्थिति-लक्षणकार्यदर्शनादयमत्यस्तीति किं न गम्यते? अथ तत्र दिगादि प्रत्यय-कार्यस्यान्यतोऽसभवात् कारणभूतान् दिगादीननुमिमीमह इति मतिः, इहाप्याकाशादीनामवगाहदानादिस्वस्वकार्यव्यापृतत्वेन ततोऽसभवादधर्मास्ति कायस्यैव स्थितिलक्षणं कार्य्यमिति कि नानुमीयते? अथासौ न कदाचिद् दृष्ट? एतद्दिगादिष्वपि समानम्। अथ सौगतः सोऽप्येवं वक्तव्य' यथा—भवत' कथं बाह्यार्थसंसिद्धि.? नहि कदाचिदसौ प्रत्यक्ष गोचर', साकारज्ञानवादिनः सदा तदाकारस्यैव संवेदनात्; तथा च तस्या प्यनुपलभ्यमानत्वादभाव एव, अथाकारसंवेदनेऽपि तत् कारणमर्थः परि-

कल्प्यते, धूमज्ञान इवाग्नि. एवं सति स्थितिदर्शनेऽपि किं न तत् कारणस्याधर्मास्तिकायस्य निश्चय. ? अथायमप्यभिदधीत—न कदाचिदसौ तत् कारणत्वेनेक्षित इति, ननु बाह्यार्थेऽपि तुल्यमेतत्, नहि सोऽपि तदाकार कारितया कदाचिदवलोकित', अथ मनस्कारस्य चिद्रूपतायामेव व्यापारो नतु नियता (त) कारणत्वे, अतस्तत्रार्थ. कारण कल्प्यते, एव तर्हि जीव पुद्गलौ परिणाममात्र एव कारणं, स्थितिपरिणतौ पुनरधर्मास्तिकायोऽपेक्षा कारणत्वेन व्याप्रियत इति किं न कल्प्यते ? अथासौ सर्वदा सर्वस्य सन्निहित इत्यनियमेन स्थिति—कारणं भवेत्, नन्वेवमर्थोऽपि किं सन्निहित इत्येव स्वाकारमर्पयति ? अथ चक्षुरादि व्यापारमयमपेक्षते, अधर्मास्तिकायोऽपि तर्हि स्वपरगतौ विश्रसाप्रयोगावपेक्षत इति नानयोर्विशेषमुत्पश्याम', तथा 'भाजनम्' आधार. 'सर्वद्रव्याणा' जीवादीना 'नभ' आकाशम्, अवगाह'— अवकाशस्तल्लक्षणमस्येत्यवगाहलक्षण तद्धयव गाढुं प्रवृत्तानामालम्बनी भवति, अनेनावगाहकारणत्वमाकाशस्योक्त न चास्य तत् कारणत्वमसिद्ध, यतो यद्यदन्वयव्यतिरेकानुविधायि तत्तत् कार्यं, यथा चक्षुराद्यन्वयव्यतिरेकानुविधायि रूपादि विज्ञानम्, आकाशान्वयव्यतिरेकानुविधायीचावगाह:, तथाहि—शुषिर रूपमाकाशं, तत्रैव चावगाहो, न तु तद्विपरीते पुद्गलादौ, अ- काशेऽपि कथं नावगाह' ? उच्यते, स्यादेव यदि कश्चिदवगाहि तत्र तु धर्मास्तिकायस्य जीवादीनां चासत्त्वेन तस्यैवाभाव समस्तु ? नन्वेवमपि न तत् सिद्ध, हेतोरसिद्धत्वात्, त- भावत्. सति हि—तस्मिन् भवनमन्वयो, न च तत् ... याभावे च व्यतिरेकस्याप्यसिद्धिरिति, ननु कथं न ...

भित्याद्यभाव एवाकाशमिति, एवं सत्याकाशाभाव एव भित्त्यादय इत्यपि किं न भवति ? अथ तेषां प्रमाणप्रतीतत्वात्, इहापि किं न प्रमाणप्रतीति ? तथाहि — वियति विहग इत्यादि, प्रतीत्यन्यथानुपपत्याऽनुमानतस्तत् सिद्धः नचेयं प्रतीतिरन्यथाऽपि संभवतीति न ततस्तत् सिद्धिरिति (वक्तुं) युक्तं एवं हि भित्त्यादिप्रतीतेरपि भित्त्याद्यभावेऽपि भावकल्पनया तेषामप्यभावप्रसक्ति, अथ तत् प्रतीते. प्रामाण्यनिश्चय इति नान्यथात्वकल्पना, एवं तर्हि वक्तव्यं—कुतोऽस्या: प्रमाणनिश्चय ? किं प्रमाणान्तरानुग्रहात्, वाधकाभावाद् वा ? यदि प्रमाणान्तरानुग्रहात्, किं तत् प्रमाणान्तरं ? य इहावाधितप्रत्ययः स सर्वः प्रमाणं, यथा सुखादिप्रत्यय,: बाधितप्रत्ययाश्चामी भित्यादिप्रत्यया इत्यनुमानमितिचेत् यद्येवमिहापि यो य इह प्रत्यय: स सर्वः सालम्वनो यथेह कुण्डे दधीति प्रत्ययः इह प्रत्ययश्चायम् इह विहग इति प्रत्यय इत्यनुमानमस्त्येव, अथैवमाधारमात्रस्यैव सिद्धिः नत्वाकाशस्य कथं न तत् सिद्धिः ? यदेव ह्याधारमात्रं तदेवाकाशमिति वयं ब्रूम, अथ वाधकाभावात्, ननु वाधकमपि विपरीत प्रत्ययोत्पत्तिरूपं, तदभावश्चोभयत्र समान इति न भित्याद्यभाव एवाकाशं किंतुशु।पेर रूपमन्यदेव, ततस्तद्भावभावितत्त्वादवगाहस्य कथं न तत् कारणत्वसिद्धिराकाशस्य ? एवञ्च स्थितमेतद् — अवगाहेन कार्यरूपेण लक्ष्यमाणत्वादवगाहलक्षणं नभः, तथा वर्त्तन्ते — भवति भावास्तेन तेन रूपेण तान् प्रतिप्रयोजकत्वं वर्त्तना सा लक्षणं — लिङ्गमस्येति वर्त्तना लक्षण:, कोऽसौ ? काल:, इदमुक्त भवति—यदमी शीतवातातपादय. ऋतु विभागेन भवन्ति यश्च केचिच्छशधरकरनिकरा-

नुकारिपारतीप्रसवा अन्ये तु तुहिनशिलाशकलविशदकुन्दमालतीकुसुमवा-
सर्वांहन अपरे च केशरतिलकुरुवकशिरीषाङ्कोल्लप्रसूनजृम्भमाण
परागभाजः तदितेर च करिदशनसकलधवलमल्लिकाविहलपारमल
हारिणः परे च कदम्बकेतकरज पूरपूरिताम्बरा अपरे तु सप्तच्छद
कुसुमरजोधूलिधूसरितविश्वविश्वंभरा. अविशिष्टविशिष्टवस्तव प्रकाशन्ते
क्रमेणैव भुवनभागांस्तदवश्यममीषां नैयत्यहेतुना केनापि भवितव्यं,
स च काल इत्यलं प्रसगेन, सर्वथा वर्त्तनया लक्ष्यमाणत्वादस्ति काल
इति स्थित, तथा 'जीव.' जन्तुरूपयोगो—मतिज्ञानादि लक्षण—रूप यस्या-
सौ उपयोगलक्षणो, मतिज्ञानादिको ह्युपयोगस्तद्धर्म, स च स्वसविदित
एवेति, तदनुभवतो रूपाद्यनुभवादिव घटादिर्जीवो लक्ष्यत इति तल्लक्षणमु-
च्यते, प्रपञ्चितं चैतदिहैव प्रागन्यत्रचेति न पुन प्रतन्यते, अत एव
'ज्ञानेन' विशेषग्राहिणा 'दर्शनेन च' सामान्य विषयेण 'सुखेन च'
आह्लादरूपेण दु खेन च—तद्विपरीतेन प्रक्रमाल्लक्ष्यत इति गम्यते. न हि
ज्ञानादीन्यजीवेषु कदाचिदुपलभ्यन्त इतिकृत्वा । सम्प्रति विनेयानां दृढतर-
संस्काराधनाय उक्तलक्षणमनूद्य लक्षणान्तरमाह—'ज्ञान च' उक्त
रूपमेवं दर्शन चैव चरित्रं च तपस्तथा 'वीर्य' वीर्यान्तरायक्षयोपशम
समुत्थ सामर्थ्यलक्षणम् 'उपयोगश्च' अवहिततत्वं, किमित्याह—'एतत'
ज्ञानादि जीवस्य लक्षणम्, एतेन हि जीवोऽनन्यसाधारणतया लक्ष्यत
इति । इत्थ जीवलक्षणमभिधाय पुद्गलानां लक्षणमाह—'शब्द' ध्वनि
'अंधकार' तिमिरम्, उभयत्रसूत्रत्वात् सुपोलुक्, 'उद्योत.' रत्नादिप्रकाश.
'प्रभा' चन्द्रादिदीधितिः 'छाया' शैत्यगुणा. 'आतप' रविबिम्बजनित
उष्णप्रकाशः इति शब्द आद्यर्थः, ततश्च सम्बन्धभेदादीना परिग्रह., व

भित्याद्यभाव एवाकाशमिति, एवं सत्याकाशाभाव एव भित्त्यादय इत्यपि किं न भवति ? अथ तेषां प्रमाणप्रतीतत्वात्, इहापि किं न प्रमोणप्रतीति· ? तथाहि — वियति विहग इत्यादि, प्रतीत्यन्यथानुपपत्याऽनुमानतस्तत् सिद्धः नचेयं प्रतोतिरन्यथाऽपि संभवतीति न ततस्तत् सिद्धिरिति (वक्तु) युक्तं एवं हि भित्त्यादिप्रतीतेरपि भित्त्याद्यभावेऽपि भावकल्पनया तेषामप्यभावप्रसक्ति·, अथ तत् प्रतीते प्रामाण्यनिश्चय इति नान्यथात्वकल्पना, एवं तर्हि वक्तव्य—कुतोऽस्या· प्रमाणनिश्चयः ? किं प्रमाणान्तरानुग्रहात्, बाधकाभावाद् वा ? यदि प्रमाणान्तरानुग्रहात् , किं तत् प्रमाणान्तरं ? य इहाबाधितप्रत्यय. स सर्वः प्रमाणं, यथा सुखादिप्रत्यय,: बाधितप्रत्ययाश्चामी भित्यादिप्रत्यया इत्यनुमानमितिचेत् यद्येवमिहापि यो य इह प्रत्ययः स सर्व. सालम्बनो यथेह कुण्डे दधीति प्रत्ययः इह प्रत्ययश्चायम् इह विहग इति प्रत्यय इत्यनुमानमस्त्येव, अथैवमाधारमात्रस्यैव सिद्धिः नत्वाकाशस्य कथं न तत् सिद्धिः ? यदेव ह्याधारमात्रं तदेवाकाशमिति वय ब्रुम , अथ बाधकाभावात्, ननु बाधकमपि विपरीत प्रत्ययोत्पत्तिरूपं, तदभावश्चोभयत्र समान इति न भित्याद्यभाव एवाकाशं किंतुशुपिर रूपमन्यदेव, ततस्तद्भावभावितत्त्वादवगाहस्य कथं न तत् कारणत्वसिद्धिराकाशस्य ? एवञ्च स्थितमेतद् — अवगाहेन कार्यरूपेण लक्ष्यमाणत्वादवगाहलक्षणं नभः, तथा वर्त्तन्ते — भवन्ति भावास्तेन तेन रूपेण तान् प्रतिप्रयोजकत्वं वर्त्तना सा लक्षणं — लिङ्गमस्येति वर्त्तना लक्षण., कोऽसौ ? कालः, इदमुक्त भवति—यदमी शीतवातातपादयः ऋतु विभागेन भवन्ति यच्च केचिच्छशधरकरनिकरा-

नुकारिपारतीप्रसवा अन्ये तु तुहिनशिलाशकलविशदकुन्दमालतीकुसुमवासवाहिन' अपरे च केशरतिलकुरुबकशिरीषाङ्कोल्लप्रसूनजृम्भमाण परागभाजः तदितेर च करिदशनसकलधवलमल्लिकाबहलपरिमल हारिणः परे च कदम्बकेतकरजःपूरपूरिताम्बरा अपरे तु सप्तच्छद कुसुमरजोधूलिधूसरितविश्वविश्वंभरा अविशिष्टविशिष्टवस्तव' प्रकाशन्ते क्रमेणैव भुवनभागांस्तदवश्यममीषां नैयत्यहेतुना केनापि भवितव्य, स च काल इत्यलं प्रसंगेन, सर्वथा वर्त्तनया लक्ष्यमाणत्वादस्ति काल इति स्थित, तथा 'जीवः' जन्तुरूपयोगो—मतिज्ञानादि लक्षण—रूपं यस्यासौ उपयोगलक्षणो, मतिज्ञानादिको ह्युपयोगस्तद्धर्म, स च स्वसंविदित एवेति, तदनुभवतो रूपाद्यनुभवादिव घटादिर्जीवो लक्ष्यत इति तल्लक्षणमुच्यते, प्रपञ्चितं चैतदिहैव प्रागन्यत्रचेति न पुन. प्रतन्यते, अत एव 'ज्ञानेन' विशेषग्राहिणा ' दर्शनेन च ' सामान्य विषयेण ' सुखेन च ' आह्लादरूपेण दु खेन च—तद्विपरीतेन प्रक्रमाल्लक्ष्यत इति गम्यते, न हि ज्ञानादीन्यजीवेषु कदाचिदुपलभ्यन्त इतिकृत्वा । सम्प्रति विनेयानां दृढतरसस्काराधनाय उक्तलक्षणमनूद्य लक्षणान्तरमाह—' ज्ञान च ' उक्त रूपमेवं दर्शन चैव चरित्रं च तपस्तथा ' वीर्य' वीर्यान्तरायक्षयोपशम समुत्थं सामर्थ्यलक्षणम् 'उपयोगश्च' अवहिततत्वं, किमित्याह—' एतत ' ज्ञानादि जीवस्य लक्षणम्, एतेन हि जीवोऽनन्यसाधारणतया ल इति । इत्थं जीवलक्षणमभिधाय पुद्गलानां लक्षणमाह

'अंधकारः' तिमिरम्, उभयत्रसूत्रत्वात् सुपोलुक्, '

'प्रभा' चन्द्रादिदीधिति. 'छाया ' शैत्यगुणा. ' आत

उष्णप्रकाशः इति शब्द आद्यर्थः, ततश्च सम्बन्ध

समुच्चये, वर्णाश्च नीलादि रसश्च—तिक्तादि गन्धश्च—सुरभ्यादि स्पर्शश्च—शीतादिरेषां द्वन्द्वः, इति शब्देन चाद्यार्थेनैषां ग्रहणेऽपि पुनरुपादानं—सर्वत्रानुयायितात्ख्यापनार्थं, 'पुद्गलानां' स्कन्धादीनां 'तुः' पुनरर्थे लक्षणम् एतैरेव तेषां लक्ष्यत्वात्, आह—पौद्गलिकत्वे शब्दादीनां पुद्गललक्षणत्वमुक्तं तच्च कथम्? उच्यते, शब्दस्तावन्मूर्त्तत्वात् पौद्गलिको मूर्तिभावोऽस्य प्रतिघातविधायित्वादिभ्यः. उक्तं हि—"प्रतिघातविधायित्वाल्लोष्ठवन्मूर्त्तता ध्वनेः। द्वारवातानुपाताच्च धूमवच्च परिस्फुटम्॥१॥" अन्धकारोद्योतप्रभाणां तु पौद्गलिकत्वं चक्षुर्विज्ञानविषयत्वात्, प्रयोगश्चात्र—यत्पौद्गलिकं न भवति तच्चक्षुर्विज्ञानविषयमपि न भवति, यथाऽऽत्मादयः, चक्षुर्विज्ञानविषयाश्चान्धकारादयः, अथालोकाभावोऽन्धकारः, तथा च निरुपाख्यत्वेन तस्याः सत्त्वमुच्यते, न, सतः सर्वथा निरन्वयाभावस्याभावेनाभावरूपत्वेऽपि निरुपाख्यत्वासिद्धेः, तथाहि—घटस्य कपालाख्यपर्यायान्तरोत्पत्तिरेवाभावो न पुनरुच्छेदमात्रम्, एवमलोकस्याप्यन्धकाराख्यपर्यायान्तरोत्पत्तिरेवाभावो न तु तथाविधपरमाणुरूपतयाऽप्यभाव एव, इत्थं चैतत्, परिणामित्वाद्वस्तुनः, परिणामस्य च सत एव वस्तुनः पूर्वरूपपरित्यागेन रूपान्तरोत्पत्तिरूपत्वात्, उक्तं हि—"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम्। न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः॥१॥" एवं छायाऽऽतपयोरपि पौद्गलिकत्वं वस्तुत्वञ्च भावनीयं, तथा स्पर्शनग्राह्यत्वाच्चानयोः पौद्गलिकत्वं, तथाहि—छायायाः शैत्यमातपस्य चौष्ण्यत्वं प्रतिप्राणि प्रतीतमेवेति, अतश्च यत् केश्चिदुच्यते—शब्दोऽम्बरगुण इत्यादि, तदपास्तं भवति, उक्तञ्च—अणवः सर्वेऽपिद्रव्यात् भेदसमर्थास्तु । छायाऽऽतपस्तमः शब्दभावेन

परिणामिन ॥ १ ॥",, इत्यादि,वर्णादीना च पौद्गलिकत्व सुप्रसिद्धमेवेति सूत्रचतुष्टयार्थ ॥ अनेन द्रव्यलक्षणमुक्त, पर्यायलक्षणमाह—

**मूलः—एगत्तं च पुहुत्तं च, सखा संठाणमेव य।**

**संजोगा य विभागा य, पज्जवाण तु लक्खणं ॥१३॥**

टीकाः—एकस्य भावः एकत्वं—भिन्नेष्वपि परमाण्वादिषु यदेकोऽय घटादिरिति प्रतीतिहेतु सामान्यपरिणतिरूप, च शब्द उत्तरापेक्षया समुच्चये, पृथग्भाव पृथक्त्वम्—अयमस्मात्पृथगिति प्रत्ययोपनिबन्धन, 'च' सर्वत्र प्राग्वत्, सख्यानंसंख्या—यत एको द्वौ त्रय इत्यादिका प्रतीतिरुपजायते, संतिष्ठतेऽनेनाकारविशेषेण वस्त्विति सस्थानं—परिमण्डलोऽयमित्यादिबुद्धिनिबन्धनम्, एवेति पूरणे, 'सयोगा' अयमगुल्यो संयोग इत्यादि व्यपदेशहेतव, 'विभागाश्च' अयमितो विभक्त इति बुद्धिहेतवः, उभयत्र सम्बन्धिभेदेन भेदमाश्रित्य बहुवचननिर्देश, चशब्दोऽनुक्तनवपुराणत्वादिपर्यायोपलक्षक, 'पर्यवाणाम्' उक्तनिरुक्तानां, 'तु' पूरणे 'लक्षणम्' असाधारणरूपम्, अयमभिप्राय — य. कश्चिदस्खलित प्रत्यय स सर्व सनिबन्धनो, यथा घटादिप्रत्यय, अस्खलितप्रत्ययाश्चामी एकोऽयमित्यादिप्रत्यया ततोऽवश्यममीषां निबन्धनेन भवितव्य, तच्च न द्रव्यमेव, तस्य सदाऽवस्थितत्वेन प्रतिनियत कालैकत्वादिप्रत्ययानुत्पत्तिप्रसगात्, ततश्च यदमीषा कालनियमेनोत्पत्ति निबन्धन न तत्पर्यवेभ्यस्तत्तत्परिणतिविशेषरूपेभ्योऽन्यत्, गुणाना तु लक्षणानभिधानं रूपादिरूपाणां तेषामतिप्रतीतत्वात्प्रायो विप्रतिपत्त्यविषयत्वाच्चेति सूत्रार्थ ॥

उत्तराध्ययन सू० मोक्षमार्ग गत्यध्ययन—२८

# जैन स्तोत्र रत्नमाला.

( जेनी अंदर नवस्मरण उपरांत
बीजा छ स्तोत्रो छे. )

छपावी प्रसिद्ध करनार
**कोठारी कसलचंद नीमजी.**



**अमदावादमां**
राजनगर प्रिन्टींग प्रेसमां छापी.

वीर संवत २४३३ संवत १९६३

मूल्य चार आना.

# अनुक्रमणिका.

विषय. पृष्ट.